# ॥ श्री शि व रा जा भि षे क म् ॥

महाराष्ट्र-शासनस्य श्रीशिवराज्याभिषेक-त्रिशताब्दी-महोत्सव-
समिति-साहाय्येन प्रकाशितम् ।

शारदा-गौरव-ग्रन्थमाला...क्र. ३१



# शिवराजाभिषेकम्

(सप्ताङ्कं नाटकम्)

लेखकः

प्रा. डॉ. श्रीधर भास्कर वर्णेकर, M. A. D. Litt.
संस्कृत-विभागाध्यक्षः नागपुर-विद्यापीठम्, नागपुरम्

पुरस्कारः — आचार्यः सरस्वतीप्रसाद-चतुर्वेदी

मूल्यम् १० रूप्यकाः

प्रकाशकः
पं. वसन्त अनन्त गाडगीळ
शारदा - गौरव - ग्रन्थमाला
४२५ सदाशिवपेठ, पुण्यपत्तनम् ३०
411 030



प्रकाशनम् —
शिवराजशकः ३०१, ख्रिस्ताब्दः १९७४

मुद्रकः
पं. वसन्त अनन्त गाडगीळ
श्रीशारदा-मुद्रण-सिद्धि-मन्दिरम्
यशवन्त-मुद्रणालयः
१८३५, सदाशिवपेठ, पुण्यपत्तनम् ३०

## प्राक्कथनम्

सुरसरस्वतीसमुपासकानां परमप्रमोदावहं यत् आदिकविवाल्मीकि-समयाद् आरभ्य प्रचलन्त्याम् अस्माकं मञ्जुल-संस्कृत-भाषायां काव्य-नाटकादि-साहित्य-क्षेत्रे अद्यापि मौलिक-कृतयः विरच्यन्ते। युक्तमिदम्, यतः अमरभारती सदैव अमरा भारतीति। प्रस्तुतं शिवराजाभिषेकाख्यं सप्ताङ्कं रूपकं संस्कृत-वाङ्मये रूपक-शृङ्ख-लायां श्लाघ्योऽभिनवः प्रक्रमः। अस्य रचयिता नागपुर-वास्तव्यः श्रीधरनामा वर्णेकरोपाख्यः कविः संस्कृत-साहित्यानुशीलन-शील-समाजे सुपरिचितः। इतःपूर्वम् कविता-नाटक-संवादिकादि-क्षेत्रेषु ग्रन्थकाररूपेण स लब्धयशाः विख्यात-नामा च। तस्य शिवराज्यो-दयं नाम ६८ सर्गात्मकं शास्त्रीय-लक्षणानुबन्धि महाकाव्यं प्रका-शितमस्ति। तस्य अप्रतिम-सौष्ठवस्य महाकाव्यस्य गुणे परिमाणे आयामे भावे च अनन्यजुष्टो माहात्म्यातिशयः तम् आधुनिक-गीर्वाणभाषा-कविषु मूर्धाभिषिक्ते पदे स्थापयति। अद्य प्रस्तोष्यमाणं शिवराजाभिषेकरूपकम् आधुनिक-युगे हिन्दु-राज्य-प्रतिष्ठापकानां गोब्राह्मण-प्रतिपालकानां श्रीशिवाजीमहाराजानां राज्याभिषेकस्य तृतीय-शताब्दी-महोत्सवावसरे प्रयोगार्थं विशेषतया रचितं रचयितुः मुकुटमध्यमणिरिव कामप्यपूर्वां शोभां धारयति। सत्यम्, उचिता-वसरः औचित्यस्य मूलम्।

वर्णकरमहाभागः काव्यानुशीलन-समकालम् एव साहित्यिक-विदुषः स्वीय-काव्य-गौरवेण परिचाययति। तस्य सरसा प्रसादपूर्णा झटित्य-र्थावबोधिका च कविता। कल्पना-प्रताने रमणीय-पद-शय्यायां च तस्य वाणी निःसंशयं कवि-कुल-गुरुं कालिदासमनुहरति। वैदर्भोऽयं कविः वैदर्भी-रीतिमनुसरतीति उचितमेव। वैदर्भी-रीति-निर्वाहकः

कालिदासो वैदर्भः स्यान्न वा, किन्तु विदर्भ-जन्मा विदर्भ-वास्तव्यश्च श्रीवर्णेकरः विदर्भ-विषये 'सारस्वती जन्मभूः' इति विदग्धोक्तिं प्रमाणयति। मधुरवर्णात्मिका तस्य काव्य-कृतिः शब्द-शय्यायां भावोपन्यासे अन्तर्निरीक्षणे च अनुपमं रामणीयकं धारयति। भारतीय संस्कृति-विषये अनुराग-प्रदर्शिका कविदृष्टिः धर्म-समाजयोः आदर्श-व्यवस्थां पुरतः स्थापयति। अतः उत्कर्षाधायकैः साहित्यिक-गुणैः अन्वितं नाटकम् इदं राष्ट्रिय-महत्त्वम् अपि आत्मन्यन्तर्भावयति साम्प्रतिक-युगे ।

बहुश्रुतो बहुज्ञश्च वर्णेकर-कविः। विशाल-भारतीय-संस्कृत-वाङ्मये यत् किञ्चित् स्पृहणीयं उद्बोधकं च दृश्यते, तस्य पदे पदे अत्राभासः परिलक्ष्यते। नाना-पुराण-निगमागम-संमतं यत् पूर्व-ग्रन्थेषु सूक्ष्मावलोकन-पाटवेन परिदृश्यते, तदत्र यथास्थानं विन्यस्तं लभ्येत। सूक्ष्मावगाहिनी कवि-दृष्टिः। अत्र यथाकालं विहितोपयोगाः भारतीयेतिहासे मध्ययुगीन-काल-विषयकाः वृत्तान्त-विशेषाः। नाटके समाज-प्रतिबिम्बनं भवतीति यदुच्यते तदव्यभिचारितयात्र प्रतीयते। अत एव महाराष्ट्र-संस्कृति-च्छटाः, विशेषतः लोकाचार-कुलाचार-विषयिण्यः, सर्वत्रापि यथास्थानं प्रतिभासन्ते।

भावग्रहणे शब्दप्रताने चाप्रतिमो वर्णेकरः कविः। पुराकवीनाम् पद-शय्या-प्रकाराः बाहुल्येनात्र परिलक्ष्यन्ते। मन्ये, श्रुतग्राहिणी कविप्रतिभा अधीतचरान् काव्यविशेषाधायकान् अंशान् विस्मर्तुं न शक्नोति। अत एव पूर्वसूरिभिः कृत-वाग्-द्वारे इव वर्ण्य-विषये वर्णेकरस्य अप्रतिहत-जवं प्रविशति काव्य-निर्माण-चातुरी, चमत्करोति च वाचक-मनांसि।

नाप्यत्र केवलं पूर्वानुकारच्छटैव हृद्या मनोहारिणी च। स्थाने

स्थाने कविकृताः नवोपक्रमाः अपि सहृदय-मनांसि आवर्जयन्ति। वस्तुतस्तु वर्णेकर-कवेः भाषा-प्रौढि-विषयकम् अमोघं नैपुण्यम्। वाग् वश्येव तमनुवर्तते। अत एव मनोनुकूलम् विविधच्छविभिः स स्वकाव्यम् अलङ्करोति। वैदर्भी-रीतिरिव गौडी-पाञ्चाल्यादि-रीतयोऽपि यथास्थानं काव्य-शोभां वर्धयन्ति। क्वचित् सुप्रसन्ना शब्दावली, अन्यतः गभीरार्था अल्पवृत्तिः इव समास-बहुलापि पदशय्या सरस-सरल-वाणी-संवलिता, अथ च ओजःपूर्णा नृत्यत्-पदावली अवलोक्यते। चरित्र-चित्रणानुसारम् अनुदेशकालं क्रियमाणानि परिवर्तनानि मनो हरन्ति। छन्दो-वैविध्य-विषये चमत्-कारिणी कवि-प्रतिभा।

" त्रिविष्टपोच्छलत्-स्खलत्-सुपर्व-वर्ग-निर्झरी-
दृढ-प्रपात-कुण्ठनोज्जटा-कटाह-मण्डनम्। "

—इत्यादि अष्टपद्यात्मकं महाबलेश्वर-स्तोत्रं रावणकृतं शिव-ताण्डव-स्तोत्रं स्मारयति। स्रग्धरा-शार्दूलविक्रीडितादि-बृहत्काय-पद्येषु शब्दच्छटा-रमणीयाः अस्खलत्-पदप्रयोगाः पण्डितराज-जगन्नाथस्य कवित्व-स्मृतिं भृशं कारयन्ति। वसन्ततिलकादि-छन्दो-बन्धेषु नैसर्गिक-पद-विस्तारः प्रौढ-कवित्वं प्रख्यापयति। शब्दालङ्काराणाम् इव उपमोत्प्रेक्षाद्यर्थालङ्काराणां निपुणो निवेशः वर्णेकरकवेः शब्दार्थोभय-कवित्वस्य परिचायकः। छायानाटकाभिध-प्रथमाङ्के सप्तच्छाया-दृश्येषु शिवाजीमहाराजस्य पूर्व-चरित्र-सङ्केतः नायकस्य पूर्णचरित-चित्रणे अद्‌भुत-नैपुण्यं विज्ञापयति। भवभूतेः उत्तररामचरितं बलात् स्मृतिपथम् आयाति। अभिषेककाले वैदिक-संप्रदायानुगत-परंपरानुसारिणी कर्म-पद्धति-प्रक्रिया कवेः श्रोत्रियत्वं द्योतयति। तदेवं साकल्येन वर्णेकरमहोदयः कविः नाटककारः

गीतकारः, साहित्यशास्त्रज्ञः, श्रोत्रियः इत्याद्यनेकभूमिकाः कौशलेन संपादयन् असाधारणं संमानम् अर्हति। तस्य कृतिषु प्रति-पृष्ठम् इदं प्रमाणितं भवति यत् पदान्वेषणे, अर्थ-प्रकल्पने, रचनावैचित्र्याधाने च नैसर्गिक-प्रतिभाशाली कविः सर्वथा वशंवद-वाक् दृश्यते।

श्रीधरनामा वर्णेकरः कविः आकैशोर्यात् मे सुपरिचितः आत्मीयः इव शुभ-कामना-व्रतीः अर्जयन् संस्कृत-कवि-समाजे मूर्धन्यतमां प्रतिष्ठाम् अर्हति। तस्य काव्यरचना-प्रौढिः साहित्य-रसिकानां दृष्टिपथं न झटित्येकपदे एव समागच्छति। गतपञ्चविंशतिवर्षेभ्यः तपःपूत-साधनया ज्ञानार्जनेन सतताभ्यासेन च एधमाना वर्णेकर-प्रतिभा वर्तमानम् उत्कर्ष-शिखरं प्राप्तास्ति। नागपुरीय-संस्कृत-साप्ताहिकपत्र-'भवितव्यस्य' संस्थापक-संपादक-रूपेण स्वीय-गद्य-शैली-परिष्कारः कृतः। तत्समकालम् एव स्फुट-कविता-रचनायां प्रावीण्यं समासादितम्। अनन्तरं नूतन-संस्कृत-साहित्य-विषयकं शोधग्रन्थं निर्माय डी. लिट्. इति उच्चतमशोधोपाधिः, अनेकविधाः साहित्यिक-पुरस्काराः च आत्मसात्कृताः। भारतेतिहास-निर्माणे अद्भुतयोगदानं कुर्वतां विवेकानन्द-सावरकर-जवाहरलाल-रामकृष्णपरमहंस-प्रभृति-देश-नायकान् स्वकाव्येन अमरान् व्यदधात्। इदानीं च स्वनामधन्यस्य शिवाजिमहाराजस्य चरितविषये चेतश्चमत्कारि महाकाव्यं प्रस्तुत-नाटकं च निर्माय स आत्मनः कृतित्व-संपदां परां काष्ठां नीतवान् इत्यस्माकं महान् आनन्दोत्सवः। अतिक्रामति काले वयसा सह कवि-यशोवृद्धिं लभमानो वर्णेकरः समेषां साहित्य-रसिकानां हार्दिकम् अभिनन्दनम् अर्हति।

कृष्ण-जन्माष्टमी, १८९६ — सरस्वतीप्रसादः चतुर्वेदी

१० ऑगस्ट १९७४ प्रयागस्थः

# प्रास्ताविकम्

१९६८ ख्रिस्ताब्दे संपूर्णतां गतम् अस्मदीयं " शिवराज्योदयम् " नाम ६८ सर्गात्मकं महाकाव्यम् । तच्च १९७२ ख्रिस्ताब्दस्य मार्च-मासे (शारदा-गौरव-ग्रन्थमाला क्र. ८.) प्रकाशितम् । तन्निमित्तं शिवचरित्रविषयकं यत् किमपि साहित्यं पठितं तत्र श्रीमद्-गागाभट्ट-काशीकर-विरचितः शिवराजाभिषेक-प्रयोगाख्यः प्राचीनः धर्मशास्त्र-विषयकः ग्रन्थः अपि भूयसा पर्यालोचितः आसीत् । मुद्रित-महाकाव्यस्य मुखपृष्ठे आगामि-प्रकाशनार्हं " शिवराजाभिषेकम् " नाम नाटकम् अस्माभिः निर्दिष्टम् आसीत् ।

१९७१ ख्रिस्ताब्दस्य एप्रिलमासे मुम्बापुर्यां ब्राह्मणसभया अयोजितं त्रयोदश-संस्कृत-नाटक-सत्रं विलोक्य शीघ्रमेव संकल्पितपूर्वं " विवेकानन्दविजयम् " नाम महानाटकं विलिखितम् ।

ततश्च तस्यैव महानाटकस्य प्रकाशन-प्रयोगयोः दत्तावधानतया सर्वथा विस्मृति-पथं गतमिव शिवराजाभिषेक-नाटकस्य लेखनम् । ततश्च भूयस्सु कार्यान्तरेषु व्यापृतमनस्कतया शिवराजाभिषेक-लेखनार्थं न लब्धः पर्याप्तः अवसरः ।

१९७३ ख्रिस्ताब्दस्य ऑक्टोबर-मासे महाराष्ट्र-शासनस्य श्रीशिव-राज्यारोहण-त्रिशताब्दी-महोत्सव-समित्या सदस्यत्वेन निमन्त्रितः अहं मुम्बापुर्यां मुख्यमन्त्रिणः भवने समायोजितायां सभायाम् । तदानीं कन्याकुमारीक्षेत्रे विवेकानन्द-केन्द्रस्य संस्कार-वर्ग-कार्येषु व्यापृताः वयं न तत्र सभायां गन्तुं प्राभवाम । परम् अनेन निमित्तेन सहसैव संकल्पित-पूर्वस्य शिवराजाभिषेकनाटकस्य स्मरणम् अस्मदन्तःकरणे प्रकर्षेण पुनः उद्भूतम् । ततश्च मुम्बापुरी-विश्व-

विद्यालयस्य राजाभिषेक-ग्रन्थार्थं ( Coronation Volume ) गागाभट्टकृतस्य राजाभिषेक-प्रयोग-ग्रन्थस्य मराठीभाषानुवादादि-कार्ये कथंचित् समायोजितः अहं संपादकमहोदयैः। तन्निमित्तं शिव-राजाभिषेकस्य चिन्तनं यथाक्रमं समवर्धत । अन्यदपि एतदनुबन्धि किमपि साहित्यम् अस्मिन् अवसरे अस्माभिः वाचितम् । ततश्च १९७४ खिस्ताब्दस्य फाल्गुने मासि श्रीशिवजन्मोत्सवादारभ्य महाराष्ट्रे राज्ये सर्वत्र शिवराजाभिषेक-त्रिशताब्दी-महोत्सवः प्रकर्षेण प्रावर्तत। एतावता कालेन क्रमशः अङ्कुरितं पल्लवितं च नाट्य-लेखन-संकल्प-बीजं शीघ्रं पुष्पितमिव ग्रन्थरूपेण। श्रीराम-जन्मोत्सवदिवसे (१–४–१९७४) समारब्धं शिवराजाभिषेक-नाटकस्य लेखनं (अन्तरा ज्वरारम्भेण खण्डितम् अपि श्रीशिवाजि-जन्मोत्सवशुभ-तिथौ* वैशाखे वदि द्वितीयायां (२४–४–७४) बुधवासरे सर्वथा सपूर्णतां गतम् ।

### पा त्रा णि

अस्मिन् नाटके प्रायः सर्वाण्येव पात्राणि ऐतिहासिकानि सन्ति । तेषु शिवाजी – जिजाम्बा – सोयराम्बा – शम्भुराज – राजाराम – गागाभट्ट – परमानन्द – केशवदैवज्ञ – अनन्तदेवभट्ट – निश्चलपुरी – मोरोपन्त – ऑक्झेण्डन – इत्येतेषां नामानि महाराष्ट्रेतिहास-विशेषज्ञानां सुपरिचितानि एव सन्ति। अस्मिन् नाटके च संभाषणादिषु तच्चरित्र-परिचयः जायेत । हीरकणिका च हिरकणी इति नाम्ना महाराष्ट्रे सुविदिता अस्ति। तत्संबन्धिनी लोक-गाथा च अस्मिन्नाटके तन्मुखेनैव निवेदिता । इतिहासे अप्रसिद्धौ श्रीधर-

---

* महाराष्ट्रे शिव-जन्म-तिथि-विषयकः विवादः अद्यावधि वर्तते। अतः फाल्गुने वैशाखे च शिवजन्मोत्सवौ लोकैः आयोज्येते ।

देवदत्तौ परमानन्दस्य पुत्रौ पितृवत् काव्य-कला-निपुणौ आस्ताम्। शिवराजोत्तर-कालीने परमानन्द-काव्ये तयोर्नामनी उपलभ्येते। हीरकणिकायाः सखी रत्नमाला अनैतिहासिकी कविकल्पिता अस्ति। कथावस्तुनि प्रत्यक्षं प्रदर्शिताः तथा संवादावसरे निर्दिष्टा वा प्रायः सर्वा घटना दूरान्वयेन कथंचिद् इतिहास-गाथानुवन्धिन्यः सन्ति। तथा च तत्र तत्र निर्दिष्टानि स्थानानि अपि वास्तवानि एव सन्ति।

**छा या ना ट क म्**

प्रथमेऽङ्के 'पूर्वशिवचरितम्' नाम छायानाटकं प्रदर्श्यते। नाट्यशास्त्रे अनिर्दिष्टम् अपि 'छायानाटकं' नाम रूपकं प्राचीन-भारते आसीत्। नीलकण्ठेन महाभारत-टीकायां रूपोपजीवनस्य लक्षणं दीयते। यथा रूपोपजीवनं जालमण्डपिकेति दाक्षिणात्येषु प्रसिद्धम्, यत्र सूक्ष्म-वस्त्रं व्यवधाय चर्ममयैराकारैः राजामात्यादीनां चर्या प्रदर्श्यते। एतदेव छायानाटकस्य लक्षणम्। पाश्चात्येषु "मॅजिक लॅण्टर्न शो" (दीपमाया-नाटकम्) इति रूपेण इदं छायानाटकम् आधुनिक-चित्रपटस्य पूर्वस्वरूपतया आसीत्। अल्पीयः कथावस्तु-प्रदर्शनार्थं वात्स्यायनीये कामशास्त्रे निर्दिष्टः आख्यानक-पटः तथा मुद्राराक्षसे निर्दिष्टः यम-पटः पुरा किल आसीत्। उत्तरे रामचरिते प्रथमे अङ्के चित्रपट-प्रदर्शनेन पूर्वरामचरितं कविना प्रदर्शितम् इति सुविदितम् एव सर्वेषां संस्कृत-नाट्य-विशेषज्ञानाम्। पुरा किल (१३ शताब्द्यां) सोमनाथ-मन्दिर-पुनः-प्रतिष्ठा-स्मरणोत्सव-निमित्तम् अनहिलवाड-नृपतेः त्रिभुवनपालदेवस्य राजसभायां सुभटकवि-विरचितं दूताङ्गदं नाम छायानाटकं प्रदर्शितम् आसीत्। व्यास-रामदेवकविना रामाभ्युदयं पाण्डवाभ्युदयं सुभद्रापरिणयं च इति त्रीणि छायानाटकानि (१५ शताब्द्यां)

विरचितानि। तथा (शंकरलालकृतं) सावित्रीचरितं, अन्यच्च एकं हरिदूतं नाम छायानाटकम् अस्ति यत्र भगवतः श्रीकृष्णस्य दुर्योधन-सभायां दौत्यं वर्णितम्।

दक्षिण-भारते महाराष्ट्र-आन्ध्र-केरल-तामिळप्रदेशेषु छाया-नाटकानां प्रचारः पुरा किल आसीत्। जावा-सुमात्रा-वाली-प्रभृति द्वीपेषु भारतीयैः प्रचारितानि छायानाटकानि अद्यावधि लोक-प्रियाणि सन्ति।

अत्र प्रथमे अङ्के संक्षेपतः प्रदर्शितानि छाया-नाटकस्य सप्त-दृश्यानि अन्तिमे परिशिष्टे सविस्तरं दीयन्ते। सति संभवे तस्य सप्त-दृश्या-त्मकस्य पूर्व-शिवचरितस्य प्रयोगः अपि कारयितुं शक्यते। तत्र परिशिष्टान्तर्गते पूर्व-शिव-चरिते प्राधान्येन अस्मद्-विरचित-शिव-राज्योदय-महाकाव्यस्य पद्यभागः समुद्धृतः।

* * * *

शिवराजाभिषेकार्थं सदाहं प्रेरितो यथा।
वन्दे गीर्वाणभक्तिं तां हृत्स्थां शिवपरायणाम्॥
संस्कृतनाटकरसिका ये खलु शिवराजभक्तिमयहृदयाः॥
तेषामस्तु मुदे मम कृतिरियमितिमात्रमीहते चेतः॥

* * * *

आनन्द-नाम्नि शिवराज-महाभिषेक-
संवत्सरे त्रिशतवर्ष-महोत्सवे च।
भक्त्याऽर्पये शिवनृपाङ्घ्रिसरोजयुग्मे
गीर्वाणनाटकमयं मधुरोपहारम्॥

* * *

वागीश्वरी-निकेतनम्
८० अभ्यंकर-नगरं, नागपुरम् १०

डॉ. श्री. भा. वर्णेकर

# शिवराजाभिषेक-नाटकस्य कथावस्तु

प्रस्तावना – नान्दी-गायनान्ते सुप्रसन्नः सूत्रधारः शिवरात्रिनिमित्तं शिवमन्दिरं प्रति प्रातः एव निर्गत्य नियतसमये अनागतां गृहिणीं चिरं प्रतीक्षते। तदानीम् एव प्रत्यागता सा प्रत्यागमनकालातिपातस्य निमित्तं निवेदयति। शिवरात्रि-व्रतोत्सवनिमित्तं रायगिरौ नवनिर्मिते श्रीजगदीश्वर-मन्दिरे शिवाभिषेकार्थं पौलस्त्यपुर-(पोलादपुर)-वासिन्यः सर्वाः सुवासिन्यः गताः आसन्। तत्र स्वजननीम् अनुगच्छतः शिवराजस्य दर्शनेन देवदर्शनपुण्यं मया प्राप्तम् इति सानन्दं वदन्तीं तां सूत्रधारः प्राह, "राजदर्शनेन देवदर्शनस्य पुण्यं तदैव प्राप्यते यदा सः राजा यथाविधि सुवर्ण-सिंहासन-संनिविष्टः मूर्धाभिषिक्तः च भवति। सर्वथा लोकहृदयासनाधिष्ठितः अपि शिवराजः नाभिषिक्तः" इति। तदा सहसा प्रविष्टः नटः शिवराज-चरितस्य लोकोत्तरं महिमानं वर्णयति। नेपथ्ये च परमानन्दस्य गुरुकुलं प्रति समागतानां श्रीगागाभट्ट-प्रमुखानां विद्वज्जनानां सभाजनार्थं गुरुकुलच्छात्रैः "पूर्वशिव-चरितम्" नाम अपूर्वं छाया-नाटकं रात्रौ प्रयोक्ष्यते इति घोषणां श्रुत्वा सर्वे तद् अवलोकयितुं गच्छन्ति।

छायानाटकं नाम प्रथमोऽङ्कः — छायानाटके सप्तदृश्यानि सन्ति।

प्रथमे – प्राचीन-शिवालये शिवलिङ्गं परितः उदग्र-करवालाः शिवाजी-प्रमुखाः तरुणाः प्रदक्षिणीकुर्वन्ति।

द्वितीये – राजसभालये सिंहासनासीनः सचिवादिगणेन परिवृतः विजापुराधीशः। तत्र प्रविष्टः आहितुण्डिकः चरः विजापुर-साम्राज्यस्य शिवाजि-कृत विध्वंसं निवेदयति। तदा जवनिकान्तः-

स्थिता यवनराजमाता सर्वान् अधिकारिणः धिक्कुर्वती सुवर्ण-ताम्बूल-युतं पात्रं पुरः स्थापयति। सभास्थितः अफझुल्लखानः सर्वान् धिक्कृत्य ताम्बूलं गृह्णाति। यवन-राजमाता रत्नहारान् तस्मै समर्पयति। राजा च शिवाजिं निहन्तुं स्व-कटि-पट्ट-बद्धं खड्गं ददाति। अफझुल्लः सर्वान् हुंकारैः धिक्करोति।

**तृतीये**– पटमण्डपे सचिव-द्वितीयः अफझुल्लः शिवराजागमनं प्रतीक्षते। शिवाजिः 'जय जगदम्ब' इति गर्जन् मण्डपं प्रविष्टमात्रः तम् आलिङ्गति। अफझुल्लः 'हा हतोऽस्मि' इति उच्चैः आक्रन्दति।

**चतुर्थे** – घनान्धकारे दुर्गं परितः भ्रमन्तः यवन-सैनिकाः डिण्डिम-घोषणां श्रुत्वा स्वपन्ति। ततः प्रविशति सखड्ग-भल्ल-शूलेन सुहृद्-गणेन परिवृतः शिवाजिः। नेपथ्ये खुराघातध्वनिः। वाजिप्रभुः शिवाजिं निर्गन्तुं प्रार्थयते। सुहृज्जनान् समालिङ्ग्य शिवाजिः निर्गच्छति।

**पञ्चमे** –राजसभायां लोकव्यवहारार्थं धर्मासनम् आरूढः शिवराजः तत्र "परदाराभिमर्षिणः अपराधिनः पाणिपादं विच्छिद्यताम्" इति आदिशति। ततः यवनीं गृहीत्वा प्रविष्टं पुरुषं धिक्कृत्य सेवकजनप्रमादार्थं धर्मभगिनीं तां क्षमां याचित्वा च सौभाग्या-लंकरणैः अलंकृतां तां पतिसंनिधौ प्रेषयितुम् अमात्यं मोरोपन्तम् आदिशति। ततश्च शत्रुनगराक्रमणे आसादितं कुराणं हरित-चीनां-शुकावगुण्ठितं कृत्वा पुष्पोपहारैः अलंकृत्य च यवनानां प्रार्थनालयं प्रति प्रेष्यताम् इति राजा आदिशति। ततश्च मातुः आदेशतः सभा-विसर्जनम्।

**षष्ठे** – आगरायां राजप्रासादे कराङ्गुलि-बद्ध-पट्टकः शास्ताखानः पट्टकाबद्ध-मस्तकः जसवन्तसिंहः च शिवराजागमनम् उद्दिश्य

सभयं। ततः संवदतः प्रविशति राजपुत्र-धृत-कराङ्गुलिना शिवराजेन अनुगम्यमानः रामसिंहः। तदा श्रेष्ठराजपुरुषाणां पृष्ठतः स्थापितेषु काष्ठपीठेषु आसन-परिग्रहार्थं पुरुषेण निर्दिष्टे सक्रोधः शिवराजः "न पुरः स्थातुमिच्छामि नृपस्यास्याविवेकिनः" इति उक्त्वा निर्गच्छति।

सप्तमे – औरङ्गजेबस्य कारालयात् पुत्रविमुक्त्यर्थं दुश्चरं तपः समाचरन्ती जिजाम्बा फलाहारार्थं स्नुषायाः प्रार्थनां न अङ्गीकरोति। ततः औत्तराहाः मस्करिणः "जय जय रघुवीर समर्थ।" इति गर्जन्तः प्रतिहारीम् अनुप्रविशन्ति। मस्करिवेशः शिवराजः मातरं साष्टाङ्गं प्रणमति।

पण्डितसभा नाम द्वितीयोऽङ्कः } — प्रथमं दृश्यम् – हीरकणिका-रत्नमाले

जिजाज्ञया शिवरात्रि-पारणा-निमित्तं गुरुकुलच्छात्राणां कृते दुग्ध-कुम्भान् नयतः। मार्गे हीरकणिका स्ववृत्तान्त-निवेदनावसरे शिव-राजस्य गुणग्राहित्वं वर्णयति। नेपथ्ये – जैत्रयात्रार्थं प्रस्थितः शिवराजः गुरुकुले मुहूर्तं तिष्ठासति इति घोषणा। परमानन्दपुत्रौ श्रीधर-देवदत्तौ गागाभट्ट-प्रमुखानां संमानार्थं सभागृहं सज्ज-स्थापयतः।

द्वितीयं दृश्यम् – परमानन्दः सभागृहं प्राप्तयोः गागाभट्टानन्तदेव-भट्टयोः अभिनन्दनं करोति। तदानीं पूर्वंशिवचरितम् अभिषेकान्तं कविना न वर्णितम् इति अपूर्णत्व-दोषं दर्शयति गागाभट्टः। राजा-भिषेकं दर्शयितुम् इच्छन् अपि अभूतत्वात् न स नाटके प्रदर्शितः इति परमानन्दः आत्मसमर्थनं करोति। तदा भट्टपादाः एवं आयो-जयन्तु शिवराजाभिषेकम् इति अनन्तदेवभट्टः वदति। तदानीं

निश्चलपुरी-तान्त्रिकः केशवदैवज्ञश्च तत्र गागाभट्टानां दर्शनार्थम् आगच्छतः। एतेषां पण्डितानां राजाभिषेक-विषयक-चर्चायां गागाभट्टः "काशीनगरीतः अत्र महाराष्ट्रे आगतोऽयं गागाभट्टः न प्रतिनिर्वर्तिष्यते अकृत्वा शिवराजाभिषेकम्" इति घोषयति। तत्र संवादे स तान्त्रिकः निश्चलपुरी तन्त्रोक्ताभिषेके अभिनिवेशं प्रकटयति। नेपथ्ये जैत्रयात्रार्थं प्रस्थितस्य शिवराजस्य गुरुकुलं प्रति आगमनम् उद्घोष्यते।

महाराजानुमोदनं नाम तृतीयोऽङ्कः } — गुरुकुले शिवराजस्य मोरोपन्तेन सह आगमनम्। परमानन्दः गागाभट्टप्रभृतीन् यथाक्रमं परिचाययति। सर्वे पण्डिताः स्तोत्रम् उद्गीय पुष्पमालाभिः शिवराजम् अर्चयन्ति। तदानीं संवादावसरे शिवराजः काशीक्षेत्रे स्वश्रद्धां प्रकटयति "यवनदास्याद् विमोचितायां काशीनगर्यां भगवतः विश्वेश्वरस्य रत्नाभिषेकं यथावसरं कर्तुम् आकाङ्क्षामः" इति स्वीयाम् आकाङ्क्षां व्यनक्ति शिवराजः। गागाभट्टः स्वीयम् राजाभिषेकाकाङ्क्षितं स्फुटम् उद्गिरति। तदा "यदि मम माता जिजाम्बा राजाभिषेकविधिम् अनुमोदेत तर्हि तन्मनोरथानुरूपः स संपद्येत" इति शिवराजः प्रतिवदति। ततः रणतूर्यध्वनिं श्रुत्वा पण्डितानाम् आशीर्वचनं सविनयम् अङ्गीकृत्य शिवराजः निर्गच्छति।

मातृसंमतिः नाम चतुर्थोऽङ्कः } — पञ्चवर्षदेशीयं राजारामं डित्थेन हीरकणिका क्रीडयति। स च मतङ्गजम् आरुह्य परिभ्रमितुम् इच्छन् न तुष्यति काष्ठहस्तिना। तदानीं राजगिरौ गजरूपेण साक्षाद् गजलक्ष्मीः संप्राप्ता इति सर्वत्र महान् प्रहर्षः। राजारामः शंभुराजेन सह जिजाम्बायाः सदनं गच्छति पितुः ... वृत्तान्त

ज्ञातुम् । (इति विष्कम्भकः) ततः अङ्काधिरूढं राजारामं लालयन्ती शंभुराजेन वीजयमाना जिजादेवी रामायणकथाम् उपाध्यायमुखात् शुश्रूषते । तत्र युद्धकाण्डान्ते रामराजाभिषेक-वर्णन-सर्ग-गतं रामराज्यस्य वर्णनं शंभुराजस्य सूचनाम् अनुसृत्य उपाध्यायः वाचयति । तदा परमानन्देन सह गागाभट्टप्रमुखाः विद्वांसः जिजाम्बा-सदनम् आयान्ति । यथोचित-परिचयान्ते राजाभिषेकार्थं वयम् अत्र आगता इति पण्डिताः निजागमनप्रयोजनं कथयन्ति। संवादावसरे "ये केचिद् इदानीं शिवनृपस्य राजशासनं न प्रमाणीकुर्वन्ति ते वेदोक्त-राजाभिषेकान्ते अवश्यं प्रमाणीकरिष्यन्ति" इति गागाभट्टस्य वचः श्रुत्वा जिजाम्बा अभूतपूर्वं राजाभिषेकोत्सवं रायगिरौ आयोजयितुम् अनुमन्यते ।

**भगवदर्चनं नाम पञ्चमोऽङ्कः** — शिवराजस्य विजयवृत्तान्तश्रवणेन सुप्रसन्ना जिजाम्बा स्वकरकमलावचितैः सहस्रकमलैः जगदीश्वरं पूजयितुम् इच्छति । अस्वस्थशरीरा सा वृद्धा स्वयं तानि अवचेतुम् असमर्था । अतः तस्याः पूजार्थं शरवेधेन कमलानि चेतुं राजाराम अभ्यस्यति । तदानीं तत्र शंभुराजः संप्राप्तः । स च ज्येष्ठे सुदि त्रयोदश्यां तिथौ संपत्स्यमानस्य राजाभिषेक-महोत्सवस्य कृते समागतानां नाना-देशवासिनां विदुषां कलावतां सभाजने महाराजेन युवराजतया नियुक्तः आसीत् । तन्मुखात् स्वाभिषेकात् पूर्वं भगवतः महाबलेश्वरस्य अभिषेकं तथा छत्रधारणात् पूर्वं प्रतापदुर्गाधिदेवतायाः जगदम्बिकायाः शिरसि सुवर्णच्छत्रं समारोपयितुं परमानन्देन सोयराम्बया च सह निर्गतः महाराजः इति वृत्तान्तः ज्ञायते । (इति विष्कम्भकः) परमानन्देन सह सपत्नीकः शिवराजः पञ्चा-

नन्दः तत्रत्यं हृदयंगमं निसर्गसौन्दर्यं वर्णयति। तत्र पिप्पलवृक्षतल-स्थितस्थण्डिले श्रीरामदास-स्थापितां मारुति-मूर्ति दृष्ट्वा श्रीराम-दासानुग्रहवृत्तान्तं शिवराजः राज्ञ्यै कथयति। ततश्च गायतां नृत्यतां च भावुकानां वृन्दं विलोक्य श्रीतुकाराम-स्मरणेन तदीयं स्वसंब-न्धिनं वृत्तान्तं राज्ञ्यै निवेद्य श्रीतुकारामस्य वैराग्यं स्तौति। ततः वटद्रुमतले विश्रान्तिसुखम् अनुभवन्तं राज्ञीसमेतं महाराजं सहसा समायाताः कृषीवल-कुलाङ्गनाः नीराजना-विधिना पूजयन्ति। तदनन्तरं महाबलेश्वरलिङ्गे गङ्गादि-सप्त-तीर्थजलैः शिवराजः अभिषेकं करोति। शिवराजादेशतः अभिषेकावसरे आशुकाव्य-कुशलः परमानन्दः अभिनवं महाबलेश्वरस्तोत्रं गायति। तेन प्रसन्नः शिवराजः 'कवीन्द्र' इत्युपाधिदानेन नवरत्नहारदानेन च परमा-नन्दम् अभिनन्दति। ततश्च प्रतापदुर्गाधिदेवतायाः विग्रहे सुवर्ण-च्छत्रं समर्पयति महाराजः।

**राजाभिषेकवर्णनं नाम षष्ठोऽङ्कः** — अस्वस्थप्रकृतेः जिजादेव्या औषधार्थं कमलमधु आनेतुं नक्तं प्रेषितां रत्नमालां रायगिरौ देशान्तराद् आगतानां कलावतां नृत्यादिविलोकन-कुतूहलेन विलम्बेन आग-च्छन्तीं प्रेक्ष्य हीरकणिका तस्यै कुप्यति। तदानीम् उभे औषधदानाय जिजाम्बां प्रति गच्छतः। तत्र रामायणवाचनार्थम् उपागतः उपा-ध्यायः अवशिष्टं रामाभिषेकवर्णनं पठितुम् इच्छति। परं सा गागाभट्टविरचित-राजाभिषेक-प्रयोगग्रन्थतः शिवराजाभिषेक-वर्णनं श्रोतुम् इच्छति। उपाध्यायः तदेव क्रमशः पठति। तद् आकर्णयन्ती जिजाम्बा समग्रं राजाभिषेकविधिं मानसचक्षुषा सानन्दं साक्षात्-कुर्वती प्रसीदति। तदानीं परिश्रमेण श्रान्ता निद्रासती अपि अत्यानन्देन जाग्रती मन्दं गायति मराठी-गीतम्।

सिंहासनारोहणं नाम सप्तमोऽङ्कः } द्वारपालरक्षिते प्रासादमहाद्वारे पाश्चात्त्य-वेशधारी चारः प्रविशति। तदानीम् एव तत्र यूरोपीय-प्रतिनिधीनाम् आँग्झेंडन-पुरस्सरं यूथं संचलनं कुर्वद् आयाति। ते च प्रवेशपत्रक-दर्शनानन्तरं प्रासादान्तःप्रवेशार्थम् अनुमतिं लभन्ते। तत्र महाद्वारे हस्तिनौ दृष्ट्वा तदग्रेसरः आश्चर्यं व्यनक्ति। (इति विष्कम्भकः)

प्रथमं दृश्यम् — सुवर्णसिंहासने सपरिवारम् अधिष्ठितः शिवराजः। करकलितसुवर्णच्छत्रः गागाभट्टः वेदमन्त्रान् उच्चैर्घोषयति। चारः पाश्चात्त्य-प्रतिनिधीनाम् आगमनं महाराजाय आवेदयति। महा-राजानुज्ञया प्रविष्टं वृन्दं स्वदेशपद्धत्या प्रणम्य तूर्यध्वनिना सह स्तुतिगीतं गायति।

पाश्चात्त्याः शिवराज्ये स्वीयां नाणकशालां निर्मातुम् प्रार्थयन्ते। तेषाम् अभिप्रायम् अवगत्य —

" शस्त्रे शास्त्रे धने धान्ये भाषाभूषाकलादिषु।
अपरायत्तमूर्जस्वि स्वराज्यं कामयामहे ॥ " इति

स्वसिद्धान्तम् उद्घोषयति। अतिथिविसर्जनान्ते मातृपदवन्दनार्थं सपरिवारः शिवराजः गच्छति।

द्वितीयं दृश्यम् — जिजाम्बा शिवराजागमनं प्रतीक्षते। प्रवेशा-नन्तरं जिजाम्बा सर्वेषां कुशलं पृच्छति। तत्र निश्चलपुरी, " यावत् तन्त्रशास्त्रोक्तं विधानम् अनुसृत्य न निर्वर्तेत महाराजस्य अभिषेकः, तावद् असंपूर्णमनोरथोऽस्मि " इति वदति। तन्मनोरथं पूरयितुं जिजाम्बा महाराजम् आदिशति। ततश्च, " अहमपि असंपूर्ण-मनोरथः अस्मि " इति उक्त्वा " इदानीम् तुभ्यं कमपि उपहारम्

अर्पयितुम् इच्छामि" इति स्वमनोरथं शिवराजः निवेदयति। ततश्च मातृमहिमानम् उद्गीय, "एतदेव त्वच्चरणयोः समर्पयितुं शक्नोमि अनन्यस्वविभवः तव पुत्रकः" इति उक्त्वा राजकिरीटं तस्याः चरणयोः समर्प्य वदति, "इदानीमस्मि संपूर्ण-मनोरथः"। अन्ते भरतवाक्यम्।

॥ समाप्तम् शिवराजाभिषेकं नाटकम् ॥



॥ श्रीः ॥

# ॥ शिवराजाभिषेकम् ॥

[ नान्दी ]

जयतु जयतु देवः श्रीशिवो विश्ववन्द्यो
नगपतिशिखरस्थश्चञ्चदुद्यज्जटालः ।
सुरसरिदिति वित्ता कापि पीयूषधारा
वितनतु उपरिष्टाद् यस्य मूर्धाभिषेकम् ॥ १ ॥

भङ्क्त्वा तद्धनुरूर्जितं द्विजवरं कृत्वा च तं निर्मदं
भ्रान्त्वारण्यभुवश्चतुर्दश समाः हत्वा बहून् राक्षसान् ।
छित्त्वा रावणमस्तकावलिमथो संप्राप्य सीतां सतीं
भास्वद्वंशमहामणिर्विजयते सिंहासनाधीश्वरः ॥ २ ॥

सूत्रधारः — (प्रविश्य) अहो नु खलु भोः सहृदयहृदयंगमोऽयं भूलोकः । सर्वदा कृताभिषेक इव अयं विभाति सर्वथा । यतो हि —

वर्षास्वम्बुधरस्य संपरिपतद्धारासहस्रैर्यथा
चन्द्रस्यामृतवर्षिभिः शरदि वा सान्द्रैर्मयूखैस्तथा ।
हेमन्ते सवितुः सहस्रकिरणैः संस्पर्शसौख्यावहैः
भूलोकेऽत्र तनोति संततमहो प्रेमाभिषेकं शिवः ॥ ३ ॥

सर्वथा करुणाघनोऽसौ निजकरुणामृताभिषेकमिव जीवलोके वितनोति । तस्य हि स्मरणमात्रेणैव स्वानन्द-सुधाभिषिक्तम् इव भवति मानसं मामकीनम् । (इतस्ततो विलोक्य –) को नु खलु अस्याम् ऐकान्तिक-सुखावस्थायां न स्मरेत् सुखदुःखसहभागिनीं स्वगृहिणीम् ?कुत्र नु खलु गता भवेदद्य कुटुम्बिनी? (स्मृतिमभिनीय) आं ज्ञातम् ! अद्य शिवरात्रिव्रतनिमित्तं प्रत्यूषे एव स्नाना-

द्याह्निकं परिसमाप्य प्रतिवेशिनीभिः घृत-मधु-दधि-दुग्ध-हरिद्रा-कुङ्कुम-कुसुम-बिल्वदलपुञ्ज-रमणीयं राजतं पूजनभाजनम् आदाय (स्वरपरिवृत्तिं कृत्वा) इदानीं शिवालयं गत्वा शिवाभिषेकान्ते झटिति प्रत्यागमिष्यामीति उक्त्वा सत्वरं निर्गता, इदानीमपि गृहं नायाता गृहिणी। सत्यं खलूच्यते "गृहं तु गृहिणीहीनं कान्तारादतिरिच्यते" इति (ऊर्ध्वं विलोक्य)– अहो आश्चर्यम् –

अस्ताचलमिदं प्राप्तं प्रखरं रविमण्डलम्।
यथा प्रोत्तप्तभूलोकं म्लेच्छाधिपतिमण्डलम् ॥ ४ ॥

तत् कुतो नु बत चिरायते आर्या ?

(नेपथ्ये) आर्यपुत्र ! इयमहम्। मनाग् विलम्बेन आगताऽस्मि। अलमिदानीं मदागमन-कालातिपात-निमित्तेन विषादेन।

नटी — (प्रविश्य सहर्षम्) आर्यपुत्र ! आर्यपुत्र ! अद्य खलु –

महानानन्दसन्दोहो न माति हृदये मम।
यशोराशिरिवापारो शिवराजस्य भूतले ॥ ५ ॥

मन्ये सर्वाणि मम पुण्यानि प्राक्तन-जन्म-शतार्जितानि..................

सूत्र०— (सस्मितम्) अस्मिन् जन्मनि पुनः मादृश-पतिदेव-परिचर्यार्जितानि च —

नटी — कमपि अकल्पितोपनतं परिपाकं खलु गतानि।

सूत्र०—आर्ये ! अतिमात्रं प्रहर्षितामिव त्वाम् अद्य लक्षयामि तद् ब्रूहि किं तत्र कारणम् इति।

नटी — श्रृणोतु आर्यपुत्रः ! अद्य शिवरात्रि-पुण्यव्रत-निमित्तं यत्र नवनिर्मिते शिवालये शिवाभिषेकार्थम् अत्रत्याः पौलस्त्यपुरनिवासिन्यः सुवासिन्यः वयं गताः।

सूत्र०— (तत्स्वरमभिनीय) "तत्र साक्षात् शिव एव कैलास-शिखरात् समवतीर्णः" इति वक्तुकामा असि ?

नटी — आर्यपुत्र ! सर्वथा अद्य खलु हरिश्चन्द्रायसे प्रथमत एव अनेन सत्यवचनेन ।

सूत्र०— (सस्मितम्)– तत् किं शिवरात्रि-निमित्तं शिवव्रतपरा-यणास्य पौलस्त्यपुर-महिलामण्डलस्य दर्शनार्थम् ?

नटी — (सरोषमिव) अलं दैवतोपहासेन। प्रथमं श्रूयतां तावत् श्रवणपेयः वृत्तान्तः ।

सूत्र०—पायय तावदद्य शिवरात्रिदिने अपीतपूर्वं वृत्तान्तसोमरसम् ।

नटी — शृणोतु आर्यपुत्रः ! अस्माकं पौलस्त्यपुरतः नातिदूरवर्तिनि सह्याद्रिराज-कैलास-शिखरायमाणे रायगिरौ अद्य शिव-रात्रि-निमित्तम् अप्रतिषिद्धः भावुकानां प्रवेशः इति ज्ञात्वा तथा च —

हिमवति केदाराख्यं श्रीशैले मल्लिकार्जुनाह्वं यद् ।
तद् दिव्यं रायगिरौ जगदीश्वरनाम भाति शिवलिङ्गम् ।। ६ ।।

इति च मत्वा रायगिरि-तीर्थक्षेत्रं प्रति प्रस्थिताः वयम्। तत्र च शिवराजेन इदानीं नितान्तसुन्दरं नूतनं मन्दिरं राजमातुः जिजा-देव्याः समुपासनार्थं निर्मितम् ।

समुन्नतोदार-सुवर्णशृङ्गं तन्मन्दिरं नातिबृहत्प्रमाणम् ।
आसेचनं लोकविलोचनानां विभाति सह्याद्रिकिरीटरम्यम् ।। ७ ।।

तच्च प्राणप्रियपुत्र-विनिर्मितम् इति प्रहृष्टहृदया राजमाता जिजा-देवी स्वकरकमलावचितैः सुवर्णकमलैः तत्र भगवन्तं जगदीश्वरं समाराधयितुम् आगता आसीत् सपरिवारम् ।

सूत्र०— तत् किं राजमाता एकाकिनी परिभ्रमति ? यथा त्वम् ?

नटी — (सस्मितम्) अद्य तु अहमपि सप्रतिवेशिपरिवारमेव गताऽसं यथा राजमाता। (उभौ हसतः) आर्यपुत्र ! तत्र परि- पा वारिकेषु सहधर्मचारिणीभिः काशीदेवी-प्रमुखाभिः साक्षात् —

सूत्र० — (ससंभ्रमम्) किं स पुण्यश्लोकशिरोमणिः ?

नटी — अथ किम् ?

साक्षाद् विश्वेश्वरः क्षात्रधर्मोचित-सुविग्रहः।
गिरिराजादिव प्राप्तो नूनं राजगिरिं प्रति ॥ ८ ॥

स च मया —

विलोकितः स्वनेत्राभ्यां सुप्रसन्नशुचिप्रभः।
अनुगच्छन् स्वजननीं सन्ध्यामिव सुधाकरः ॥ ९ ॥

(बद्धाञ्जलिर्भूत्वा) आर्यपुत्र ! राजदर्शनं हि खलु देवदर्शनम् एव भूलोके। किं पुनः शिवराजदर्शनम् ? यतो हि —

शिवमिव शिवराजं दिव्यसामर्थ्यपूर्णम्।
जनगणहितहेतुं दुस्तरापत्तिसेतुम् ॥
स्मरति य इह कश्चित् सोऽपि पुण्यान्तरात्मा।
किमु पुनरिह यस्तं साधु साक्षात्करोति ॥ १० ॥

तदहम् आत्मानं बाढं पुण्यवतीं मन्ये।

सूत्र० — आर्ये ! सत्यं पुण्यवती भाग्यवती च खलु त्वमसि। परन्तु ऽऽऽ

नटी — परन्तु किम् ?

सूत्र० — राजदर्शनेन देवदर्शनस्य पुण्यं खलु लभ्यते तदेव —

नटी — कदा ?

सूत्र०— यदा सः राजा रामचन्द्रः इव रत्नखचित-सुवर्ण-सिंहासन-संनिविष्टः यथाविधि मूर्धाभिषिक्तश्च भवति।

(नेपथ्ये डिण्डिमध्वनिम् आकर्णयन्)— सर्वथा लोक-हृदयासन-संनिविष्टः अपि (मनाक् स्थित्वा उच्चैः) शिवराजः नाभिषिक्तः शिवराजः नाभिषिक्तः। (प्रविश्य नटः)

नाभिषिक्तोऽपि संस्कारैर्वने सिंहो मृगाधिपः।
सह्याचलाञ्चलेऽत्रापि शिवराजो जनाधिपः ॥ ११ ॥

तथा च

प्रतिपच्चन्द्ररेखेव वर्धिष्णुर्विश्ववन्दिता।
यशःश्रीः शिवराजस्य पुनातीदं महीतलम् ॥ १२ ॥

सूत्र०— मारिष ! अतिप्रसन्नः त्वम् अद्य लक्ष्यसे ? तत् किं नु खलु हृदयं तव प्रसादयति ?

नटी— भाव ! शिवराजस्य चरितं प्रसादयति मे हृदयम्।
तथा हि—

चरितं शिवराजस्य विजय-श्री-विराजितम्।
वीराद्भुतरसं पुण्यं रामायणमिवापरम् ॥ १३ ॥
वीरता साधुतोपेता साधुता चातुरीयुता।
चातुरी लोकमङ्गल्या चरितेऽस्मिन् विराजते ॥ १४ ॥

(नेपथ्ये सडिण्डिम-घोषम् उच्चैर्गर्जति— भो भोः शृण्वन्तु शृण्वन्तु सर्वे पौलस्त्यपुरवासिनः सज्जनाः।

काशी-विश्वेश्वर- महामन्दिर - निर्मातृ - नारायणभट्टात्मज - शंकर-भट्टस्य प्रपौत्रः नीलकण्ठभट्टस्य पौत्रः दिनकरभट्टस्य पुत्रः विश्व-

विश्रुत-सद्गुरु-वंश-प्रदीपायमानः सकल-वेद-वेदाङ्ग-पुराण-दर्शन-शास्त्र-मन्त्र-तन्त्र-पारावार-पारीणः सनातन-धर्म-धुरीणः श्रीविश्वेश्वरभट्टः 'गागाभट्टः' इति दश-दिगन्त-विदित-नामधेयः अद्य निज-गुरुबन्धुना प्रतिष्ठान-पीठ-वासिना श्रीमदनन्तदेवभट्टेन सह पौलस्त्यपुरीयं परमानन्दस्य गुरुकुलम् अभ्यागमनेन समलंकरोति। तत् तयोः अतिथि-विशेषयोः सभाजनार्थम् अभिनय-कला-कुशलैः गुरुकुलच्छात्रैः कुलगुरु-समादिष्टैः "पूर्वशिवचरितं" नाम अपूर्वं छायानाटकं प्रयोक्ष्यते। तद् अद्य रात्रौ गुरुकुल-प्राङ्गणे समागच्छन्तु भवन्तः।)

सूत्र० — सर्वथा अश्रुतपूर्वमिदं पूर्वशिवचरितं-नाम छायानाटकम्।

नटी — (सहर्षम्) शिवरात्रि-व्रत-निमित्तं जागरणम् आदिश्यते शास्त्रकारैः। तद् गच्छामः वयम् अपूर्वं तत् "पूर्वशिवचरितं" नाम छायानाटकं विलोकयितुम्। (सर्वे गच्छन्ति)

॥ इति प्रस्तावना ॥



# प्रथमोऽङ्कः

## छायानाटके दृश्यानि

प्रथमम् — प्राचीन-शिवालये शिवलिङ्गं परितः प्रदक्षिणीकुर्वन्तः 'हर! हर! हर! महादेव' इति गर्जन्तश्च उदग्र-करवालाः शिवाजि-प्रमुखाः तरुणाः ।

द्वितीयम् — राजसभालये सिंहासनासीनः सचिवादि-गण-परिवृतः विजापुराधीशः । उदग्रकरवालं समुत्थिते राजनि सर्वे तम् अनुकुर्वन्ति ।

सहसा प्रविष्टः आहितुण्डिकवेशः स्पशः मुहुर्मुहुः सखेदं भालम् उरश्च ताडयति। सर्वे साश्चर्यं भ्रान्ताः इव अन्योन्यं प्रेक्षन्ते । यवनराजमाता सर्वान् धिक्कुर्वती सौवर्ण-ताम्बूल-युतं पात्रं पुरः स्थापयति । सर्वे अधोमुखाः भवन्ति ।

अफझुल्लः साट्टहासम् उत्थाय प्रोद्धतं चलन् सर्वान् सभ्यान् हुंकारैः धिक्कुर्वन् राजमातरं राजानं च प्रणम्य सौवर्णं ताम्बूलम् उद्-गृह्णाति । राजमाता तम् अभिनन्दति, यवनराजः तस्मै स्वकटिबद्धं खड्गं समर्पयति ।

तृतीयम् — नेपथ्ये पणवानकादि-रणवाद्य-निनादः । पट-मण्डपे सचिव-पुरस्सरः अफझुल्लः सोन्मादः इव प्रविश्य उच्चासने उपविश्य इतस्ततः शिवराजागमनं प्रतीक्षमाणः मुहुर्मुहुः कटिपट्टगूढाम् असि-पुत्रिकां परामृशति ।

(नेपथ्ये) – 'जय जगदम्ब' इति त्रिवारं ध्वनिः । सहसा प्रविष्टं सचिव-द्वितीयं शिवराजं बाहू प्रसार्य अफझुल्लः दृढम् आलिङ्गन्

उच्चैः क्रन्दति, "हा हतोऽस्मि।" नेपथ्ये रणतूर्य-नादः, शतघ्नी-ध्वनिः, सेना-कोलाहलश्च।

चतुर्थम् — घनान्धकारे दुर्गं परितः भ्रमन्तः सखड्गहस्ताः यवन-सैनिकाः। नेपथ्ये डिण्डिम-ध्वनिम् आकर्ण्य स्वपन्ति। ततः सखड्ग-भल्ल-शूलेन वीरगणेन परिवृतः शिवाजिः सत्वरं प्रचलति। नेपथ्ये खुराघात-ध्वनिः। बाजिप्रभुः शिवाजिं निर्गन्तुम् प्रार्थयते। सुहृज्जनान् समालिङ्ग्य शिवाजिः निर्गच्छति। वीराः युद्धार्थम् उदग्र-शस्त्राः तिष्ठन्ति।

पञ्चमम् — राजसभायां सिंहासनासीनः शिवराजः। ततः प्रविशति रज्जुपाशबद्धं पुरुषं गृहीत्वा आरक्षकयुग्मम्। तत्कृतं परदारा-भिमर्षणापराधं श्रुत्वैव शिवराजः उच्चैः सक्रोधं गर्जति—

धर्मप्राणे स्वराज्येऽस्मिन् परदाराभिमर्षणम्।
यः करिष्यति दुष्टात्मा प्राणदण्डं लभेत सः ॥ १ ॥

* * *

ततः प्रविशति सयवनीकः कोऽपि पुरुषः। तद्वृत्तान्तं शृण्वन्नेव शिवराजः तं पुरुषं धिक्कृत्य सिंहासनाद् अवतीर्य तां वन्दते। यवनी राजानं भूयो भूयः प्रणमति।

षष्ठम् — आगरायां राजप्रासादे कराङ्गुलिबद्धपट्टकः शास्ताखानः पट्टकावबद्धमस्तकः जसवन्तसिंहश्च शिवराजागमनम् उद्दिश्य परस्परं सभयं संवदतः। ततः प्रविशति राजपुत्र-धृत-कराङ्गुलिना शिवराजेन अनुगम्यमानः रामसिंहः। तदा श्रेष्ठ-राजपुरुषाणां पृष्ठतः स्थापितेषु काष्ठ-पीठेषु आसन-परिग्रहार्थं पुरुषेण निर्दिष्टे सक्रोधः शिवराजः "न पुरः स्थातुमिच्छामि नृपस्यास्याविवेकिनः", इति उक्त्वा निर्गच्छति।

सप्तमम् — औरङ्गजेबस्य कारालयात् पुत्रविमुक्त्यर्थं दुश्चरं तपः समाचरन्ती जिजाम्बा फलाहारार्थं स्नुषायाः प्रार्थनां न अङ्गीकरोति। ततः प्रतिहारीम् अनुगच्छन्तः औत्तराहाः मस्करिणः "जय जय रघुवीर समर्थ!" इति गर्जन्तः प्रविशन्ति। मस्करिवेशः शिवराजः मातरं साष्टाङ्गं प्रणमति।

[ इति शिवराजाभिषेक-नाटके छायानाटकं*-नाम प्रथमोऽङ्कः ]

---

* संपूर्णस्य छायानाटकस्य कृते परिशिष्टं दृश्यताम्।



# द्वितीयोऽङ्कः

## (प्रथमं दृश्यम्)

(ततः प्रविशति मस्तक-न्यस्त-दुग्ध-कुम्भं गोपिकायुग्मं मार्गे।)

**प्रथमा** — अयि हीरकणिके। अपि अरोचत ते परमानन्दकवीन्द्राणां गुरुकुलच्छात्रैः समभिनीतं पूर्वशिवचरितं नाम नाटकम् ? मन्ये एवमेव देवाधिदेवः शिवशंकरः नररूपेण भुवम् अवतीर्य आश्चर्य-लीलाः करोति। अहं तु रङ्गमञ्च-स्थितं शिवाजीमेव शिवबुद्धचा भूयो भूयः प्रणामेन, पुष्पाञ्जलि-समर्पणेन च पूजितवती। हीरकणिके ! कदा त्वया प्रथमं साक्षात्कृतः शिवराजः ? (ताम् अवलोकयन्ती आत्मगतम्) अयि सर्वथा अनन्य-मनस्का इव इयं लक्ष्यते। अङ्गुल्या तस्याः कर्णं निपीडच ) अयि मूढे। ननु पृच्छामि —

**हीरकणिका** — किं नु पृच्छसि रत्नमाले ?

**रत्नमाला** — ननु पृच्छामि, कदा त्वया प्रथमं साक्षात्कृतः शिवराजः इति ?

**हीरकणिका**—(उच्चैः विहस्य) रत्नमाले ! एकदा शिवराजेन एव प्रथमं साक्षात्कृताऽस्मि ।

**रत्नमाला** — (चपेटाघातं कृत्वा) अयि असंबद्धप्रलापिनि ! किं दुग्ध-कुम्भं विस्मृत्य मदिरा-कुम्भं मस्तके धारयसि ?

**हीरकणिका** — रत्नमाले ! सत्यं ब्रवीमि। शिवराजेन एव एकदा साक्षात्कृताऽस्मि ।

**रत्नमाला** — (साश्चर्यम्) सत्यम् ?

**हीरकणिका** — सत्यम् । सशपथं सत्यं वदामि ।

रत्नमाला — स हि गुणैकपक्षपाती महाराजः शस्त्रनिपुणं भाषण-कुशलं, कृषिविज्ञं, गौरक्ष्यदक्षं वाणिज्यविज्ञं शास्त्रज्ञं, स्वामिनिष्ठं वा यं कमपि ग्रामीणं वनेचरं किंबहुना परधर्मीयम् अपि जानाति, तं तं स्वयम् आहूय मानयित्वा संगृह्णाति । त्वया तावद् गोपाल-दारिकया कीदृशः अलौकिकः गुणः प्रदर्शितः ?

हीरकणिका — शृणु रत्नमाले ! समीपवर्तिनि रायगिरौ राज-धानीं संस्थाप्य शिवराजः सपरिवारं निवासार्थम् आगतः ।

रत्न ० — ततः किम् ?

हीर० — तदा कुमारयोः शम्भु-राजारामयोः कृते गृष्टि-दुग्ध-कुम्भम् आदाय प्रतिदिनं प्रभाते सायंकाले च राजगिरौ गतागतं कर्तुं श्वश्रूः माम् आदिशत् ।

रत्न० — अहो निष्ठुरा ते श्वश्रूः । भवतु, ततस्ततः ।

हीर० — ततः एकदा सायं विलम्बेन गृहं प्रत्यागतां गृष्टिं दुग्ध्वा सत्वरं गिरि-शिखरम् आरूढा अहम् ।

रत्न० — ततस्ततः ?

हीर० — ततश्च राजप्रासादे दुग्धकुम्भान् दत्त्वा यावद् महाद्वारं प्रत्यागच्छामि तावत् पिहितं तद् अपश्यम् । तदा बहिर्गमनार्थं प्रार्थयन्तीं मां द्वारपालः रूक्षस्वरं प्राह ।

रत्न० — किमिति ?

हीर० — (स्वरपरिवृत्तिं कृत्वा) यथासमयं महाद्वारे पिहिते राजमातुः जिजादेव्या अनुमतिं विना सर्वथा नोद्घाटितव्यं तत् इति महाराजस्य आदेशः ।

रत्न० — तत् त्वया जिजादेवी — ।

हीर० — जिजादेवी बलवदस्वस्थतया तदानीं राजगिरिप्रासादे नासीत् ।

रत्न० — तत् कुत्र सा आसीत् ?

हीर० — रायगिरेः उपत्यकायां पाचाड-ग्रामे शिवराजेन निर्मिते तदुचिते महाप्रासादे ।

रत्न० — ततस्ततः ?

हीर० — तदा कुटिरे स्थितस्य षण्मासदेश्यस्य अपत्यस्य स्मरणेन व्याकुला अहम् गिरि-दुर्गाद् बहिरायातुं पञ्जरबद्धा व्याघ्रीव इतस्ततः प्राधावम् ।

रत्न० — अहो अत्याहितम् । ततस्ततः ?

हीर० — ततश्च गिरिदुर्गस्य एकस्मिन् कोणे संभाव्यनिर्गमन-स्थानं कुलदैवतं महाबलेश्वरं स्मरन्ती दुर्गमेन अपथेन सकण्टक-वृक्षशाखा-मूलानि कथमपि समवलम्बमाना अवरुह्य प्रत्यागताऽहं कुटीरे स्तनंधयम् अपत्यं पाययितुम् ।

रत्न० — अयि साहसिके ! * पर्णाल-दुर्गात् निर्गच्छतः शिवराजस्य एव अनुसरणं त्वया कृतम् । अहो ते साहसम् ! ततस्ततः ?

हीर०— ततश्च प्रत्यूषसि एव चरमुखेन विज्ञातः अयं वृत्तान्तः महाराजेन ।

रत्न० — अहो अत्याहितम् । उग्रदण्डः खलु शिवराजः श्रूयते अपराधिषु ।

हीर० — अयि सखि ! उग्रदण्डः अपि नितान्तं प्रजावत्सलः खलु महाराजः ।

रत्न० — कथम् ?

हीर०— शृणु । तदानीमेव दुग्धकुम्भान् शिरसि निधाय राज-प्रासादं प्रविशन्त्याः मम पुरस्तात् सहसा उपस्थितः महाराजः ।

रत्न० — हीरकणिके ! अहो तव भागधेयम् । ततस्ततः ?

---

* पन्हाळा इति कोल्हापुर-मण्डलस्थः दुर्गः ।

हीर० — ततः सहसैव दुग्ध-कुम्भान् अधो निधाय प्रणत-मस्तकां माम् उद्दिश्य घन-गम्भीरया गिरा आह महाराजः (स्वर-परिवृत्तिं कृत्वा) "पुत्रिके ! नितान्तं प्रसन्नः अस्मि तव साहसेन ! सर्वथा प्रियसाहसः अस्मि। 'साहसे श्रीः प्रतिवसति' इति जिजाम्बा भणति। गृहाण इमां श्रीमुद्राङ्कितां नवरत्नमालाम्।" इति तां मालां दर्शयति।

रत्न० — (सकुतूहलं विलोकयति।)

[ततः प्रविशतः कृताभिषेकौ सजल-कमण्डलु-पाणी ब्रह्मचारिणौ मार्गेण गच्छन्तौ]

एकः — आर्य श्रीधर ! अपूर्वं खलु तातचरणैः विरचितं पूर्वशिव-चरितं नाम छायानाटकम्। न मया अतःपूर्वं छायानाटकस्य नाम अपि श्रुतम् आसीत्।

अपरः — वत्स ! देवदत्त ! तत्र छायानाटके पूर्वशिवचरितम् एव अपूर्वं कथावस्तु आसीत्। छायानाटकं पुनः पूर्वपरम्परागतम् एव।

देवदत्तः — तत् कथमेवं ब्रवीषि श्रीधरार्य। साहित्यदर्पणीये नाट्यशास्त्रे हि —

"नाटकमथ प्रकरणं भाणव्यायोगसमवकारडिमाः।
ईहामृगाङ्कवीथ्यः प्रहसनमिति रूपकाणि दश॥"

इति दशविधानि एव रूपकाणि निर्दिष्टानि। न तु छायानाटकम्।

श्रीधरः — वत्स देवदत्त ! नाट्यशास्त्रातिरिक्तम् अपि तात-चरणाः बहु बहु जानन्ति। पुरा किल सुभट-कवि-विरचितं दूताङ्गदं नाम छायानाटकम् क्वचिद् महोत्सवावसरे प्रदर्शितम् आसीत् इति तातचरणानां वचनं स्मरामि।

देवदत्तः — प्राचीनेषु रूपकेषु काव्यादिषु च पौराणिकम् एव कथावस्तु सर्वत्र दृश्यते। ऐतिहासिकं न हि न हि वर्तमानकालीनं कथावस्तु आश्रित्य सूर्यवंशं नाम अनुपुराणं लिखितुं प्रतिभा-वैभवं तातचरणानामामेव दृश्यते।

श्रीधरः — एतावता कालेन अर्धं सूर्यवंशस्य समाप्तम् इति तात-चरणाः वदन्ति। इदं पुनः "पूर्वशिवचरितम्" नाम नवीनम् एव छायानाटकं तातचरणानाम्।

देवदत्तः — परम् अत्र वाचिकाभिनयः नास्ति। केवलम् आङ्गि-काहार्याभिनयनिष्ठम् इदं छायानाटकम्।

श्रीधरः — वत्स! तथापि तद्दर्शनेन नितान्तं प्रमुदिताः प्रह्लादि-ताश्च श्रीमद्गागाभट्टपादाः मया अवलोकिताः।

> रोमाञ्चकञ्चुकितगात्रमुदश्रुधारा-
> प्रक्लिन्नवक्षसमतिस्फुरदक्षियुग्मम्।
> संरुद्धकण्ठबहुधोदितसाधुवादं
> सभ्येष्वलोकयमहं विबुधोत्तमं तम्॥ १॥

हीर० — (सहसोपसृत्य) अपि नाम युवां परमानन्द-गुरुकुलस्य सब्रह्मचारिणौ?

श्रीधरः — न केवलं सब्रह्मचारिणौ। पितुरन्तेवासिनौ आवाम्।

देवदत्तः — आत्मजौ आवाम् उभौ कुलगुरोः।

रत्न० — गुरुकुलम् एव प्रस्थिते आवाम्।

श्रीधरः — तत् किंनिमित्तम्?

देवदत्तः — (अपवार्य) आर्य! जिजाम्बायाः प्रासादे पाचाडग्राम-स्थिते विलोकिते पूर्वं मया एते।

श्रीधरः — अपि नाम जिजाम्बा युवाम् अत्र प्रेषितवती?

हीर० — शिवरात्रिव्रतं ह्यः समाचरितं जिजाम्बया ।
रत्न० — अद्य पारणा-विधिः तस्य व्रतस्य ।
देवदत्तः — युज्यते । ततः किम् ?
हीर०— अद्य प्रभाते दुग्धकुम्भान् आदाय प्रासादं प्रविशन्तीं मां—
रत्न० — ननु मां च —
हीर० — जिजाम्बा एवम् आह ।
श्रीधरः — किम् आह सा सकल-लोक-जननी ?
हीर० — (स्वर-परिवृत्तिं कृत्वा) हीरकणिके ! रत्नमाले ! अद्य शिवरात्रिव्रत-पारणानिमित्तं परमानन्दगुरोः आश्रमं गत्वा छात्राणां कृते दुग्धकुम्भान् प्रापय इति ।
उभौ — अहो प्रजावात्सल्यं जिजाम्बायाः !
श्रीधरः — सर्वथा सुतनिर्विशेषं पश्यति गुरुकुल-बालकान् ।
देवदत्तः — सरिदिव करुणासुधातरङ्गा

सुविमलभावमनोज्ञहंसमाला ।
सततमभिसमेतसाधुतीर्था
जगदखिलं हि पुनाति सा जिजाम्बा ॥ २ ॥

श्रीधरः — एते वयं गुरुकुलं प्राप्ताः । तदन्तःप्रविश्य दीयताम् अयं जिजाम्बया प्रेषितः भूलोक-पीयूषायमानः गोरसः ।
( उभे गच्छतः )
देवदत्तः — (अन्यतः अवलोक्य) आर्य ! पश्य पश्य एते श्रीमद्-गागाभट्ट-प्रमुखाः अतिथिदेवाः परिसमाप्त-प्रातराह्निकाः तात-चरणान् अनुगच्छन्तः सभागृहम् एव यान्ति । तदेहि गच्छावः सभागृहं पर्यवस्थापयितुम् ।

(इति निष्क्रान्तौ)

## द्वितीयं दृश्यम् ।

(आगच्छन्तु आगच्छन्तु पूज्यपादाः गागाभट्टाः श्रीमदनन्तदेव-भट्टाः!! अलंक्रियताम् अलंक्रियताम् आसनम् इदम् । महान् खलु अयं प्रमोदावसरः प्राप्तः । नूनं सुकृतशतानां परिपाकः अयं यत् भवादृशां शुभागमनं नाम)

(नेपथ्ये बालकाः पठन्ति 'शिवराजः शिवराजौ शिवराजाः ।' प्रथमा) सर्वथा सुष्ठु खलु इदम् उच्चते —

विजयादशमी सैव सैव दीपावलीतिथिः ।
यदा सदनमायान्ति विद्वांसो विश्ववन्दिताः ।। ३ ।।

**गागाभट्टः** — (छात्रध्वनिम् आकर्णयन्) परमानन्द! भूतलेऽस्मिन् एकः एव अद्वितीयः शिवराजः । तत् किमर्थं "शिवराजौ शिवराजाः ।" इति द्विवचन-बहुवचने पठन्ति एते बालकाः ?

**अनन्तभट्टः** — सखे गागाभट्ट । 'यथा रामः रामौ रामाः' इति पठन्ति स्म तथैव इयं नूतना कालोचिता पद्धतिः गुरुकुलेऽस्मिन् प्रवर्तिता शिवराजैकनिष्ठेन परमानन्देन इति तर्कयामि ।

**परमानन्दः** — सर्वथा प्रसन्नः ते तर्कः अनन्तभट्ट !

**गागा०** — सखे ! अद्वितीये अपि रामचन्द्रे नामशब्दस्य द्विवचन-बहुवचनप्रयोगे नास्ति दोषः । यतः हि पुराणेषु जामदग्न्यः रामः, दाशरथिः रामः, रौहिणेयः रामः इति च त्रयः रामाः प्रसिद्धाः । शिवराजः पुनः एकः एव अद्वितीयः । एकः एव अद्वितीयः शिवराजः !!

**परमानन्दः** — अहो सूक्ष्मेक्षिका विपश्चिदपश्चिमानां भट्ट-पादानाम् ।

**अनन्त०** — अहो परमानन्द ! अतः पूर्वपाटीम् अनुसृत्य 'रामः

रामौ रामाः ।' इत्येव पाठयितव्याः छात्राः इति भट्टपादानाम् अभिप्रायं तर्कयामि ।

**गागाभट्टः** — परमानन्द ! ह्यस्तनं नाटकीयं पूर्वशिवचरितं विचिन्तयद्भिः अस्माभिः शिवराजस्य अद्वितीयत्वं विमृश्य एवम् उक्तम् । अहो नाटकस्य सामर्थ्यम् !

विविधाधि-परिग्रस्ते लोकेऽस्मिन् विदधौ विधिः ।
जनता-हित-सौख्यार्थं नाट्यं पुण्यरसायनम् ॥ ४ ॥

तथा च —

जयति नटवपुरवस्थास्वान्तो रसनिष्ठवृत्तिशीलश्च ।
स्वपरिच्छदसंचारी वस्तुचरित्रोऽत्र नाट्यपुमान् ॥ ५ ॥

**परमानन्दः** — सखे अनन्तभट्ट !

पाण्डित्यं च कवित्वं च नास्त्येकत्रोभयं क्वचित् ।
दृश्यते तुङ्गता नाब्धौ, नाद्रौ तस्य गभीरता ॥ ६ ॥

श्रीमत्सु गागाभट्टेषु तु

पाण्डित्यं च कवित्वं च द्वयम् एकत्र राजते ।
प्रतापश्च प्रकाशश्च पुण्येऽम्बरमणाविव ॥ ७ ॥

**अनन्तभट्टः** — सखे परमानन्द ! अपूर्वं खलु ते प्रतिभावैभवम् । सर्वथा कवीन्द्र-पदवीम् अर्हति भवान् ।

**गागाभट्टः** — सखायौ !

शूराणां कृतविद्यानां वदान्यानां च भूभृताम् ।
स हि मूर्धाभिषेकार्हो गुणो गुणिगुणज्ञता ॥ ८ ॥

**परमानन्दः** — कुतः खलु समुपार्जितं नाटक-रचना-कौशल्यम् इदम् ? यतो हि —

न दैवतानुग्रहमन्तरेण न वाऽथ पूर्वार्जितभूरिपुण्यम् ।
परिस्फुरत्यत्र मनुष्यबुद्धौ सुदुर्लभोऽसौ प्रतिभाविलासः ॥ ९ ॥

परमानन्दः — भगवन् ! छात्रदशायां काशीक्षेत्रे नियतं गङ्गा-जलाभिषेकम् आचरति जनेऽस्मिन् देवाधिदेवेन (साकूतं गागा-भट्टं विलोक्य) विश्वेश्वरेण नूनं प्रसादीकृतोऽयं कोऽपि गुणलेशः भवादृश-महापुरुष-सौहार्द-लाभश्च। यतो हि —

महापुरुषसौहार्दं भूलोकपरमामृतम्।
अगण्य-पुण्य-संप्राप्ये स्वर्गलोकेऽपि दुर्लभम् ॥१०॥

अनन्तभट्टः — अहो कवीन्द्र ! भगवतः रामचन्द्रस्य त्रिभुवन-पावनं चरित्रं द्विधा विभक्तम् इव दृश्यते। तत्र धर्मासनारोहणम् आरभ्य उत्तरं चरितम्।

गागाभट्टः — पूर्वचरितं तु राजाभिषेकान्तम्।

परमानन्दः — सत्यं ब्रवीति भवान्।

चरितं रामचन्द्रस्य द्विधेव कविभिर्मतम्।
भूमण्डलमिवाखण्डं पूर्वपश्चिमखण्डयोः ॥११॥

गागाभट्टः — अत एव अनभिषेकान्तं भवदीयं पूर्वशिवचरितम् असंपूर्णम् इव मां प्रत्यभात्।

अनन्त० — सर्वथा निरङ्कुशाः खलु कवयः। कर्तुम् अकर्तुम् अन्यथाकर्तुम्।

परमानन्दः — सखायौ !

विपश्चितः समीक्षन्ते गुणान् दोषांश्च तत्त्वतः।
चक्षुष्मन्तो हि पश्यन्ति तेजांसि च तमांसि च ॥१२॥

तथापि महा-पुरुष-चरित्र-वर्णने न सर्वथा निरङ्कुशाः कवयः इति मे निश्चितं मतम्। अतोऽहं ब्रवीमि।

निरङ्कुशाः सुकवयः महापुरुषवर्णने।
कदाप्यभूतं वृत्तान्तं वर्णयेयुर्न भूतवत् ॥१३॥

अत एव भृशम् इच्छन्नपि नाशक्नुवं राजाभिषेकं दर्शयितुं छाया-नाटके।

अनन्तभट्टः — अत एव सर्वगुणपूर्णम् अपि अपूर्णम् इव दृष्टं पूर्वशिवराजचरितं भावत्कम् ।

गागा० — अनन्तभट्ट ! सर्वथा चिन्तयन् अपि नात्र कवीन्द्रस्य दोषं पश्यामि ।

अनन्तभट्टः — तद् भट्टपादाः एव समायोजयन्तु शिवराजाभिषेकम् ।

परमानन्दः — ( स्वगतम् ) अस्मन्मनीषितम् एव आह श्रीमान् अनन्तभट्टः ।

(सहसा प्रविश्य)

श्रीधरः — तात ! पण्डितश्रेष्ठानां गागाभट्टानां दर्शनार्थं निश्चलपुरी केशवपण्डितः च अभ्यागतौ ।

परमानन्दः — शीघ्रं प्रवेशय तौ महानुभावौ पाद्योदकेन सत्कृत्य । सखायौ !

पण्डिता द्रष्टुमायान्ति दूरादपि सुपण्डितान् ।
अनाहूता ह्युपायान्ति भ्रमराः कमलाकरान् ॥१४॥

अनन्तभट्टः — सखे ! कौ एतौ पण्डितौ ?

परमानन्दः — एकः महान् तान्त्रिकः अपरश्च अद्वितीयः दैवज्ञः शिवराजाज्ञया करणकौस्तुभ-नामकस्य ज्यौतिष-ग्रन्थस्य लेखकः ।

गागा० — दिष्ट्या शुभोऽयम् अवसरः । यदहं शिवराजाभिषेकोचितं मुहूर्तं चिन्तयन् दैवज्ञ-वरेण्यं पश्यामि ।

छात्रः — आगच्छन्तु, आगच्छन्तु महानुभावाः ।

परमानन्दः — अलंक्रियताम् इदम् आसनम् । अलंक्रियताम् । (गागाभट्टं निर्दिशन्) एते हि काशीपुराद् अत्र आगताः गागाभट्ट-

इति उपाख्यया सुविदिताः विश्वेश्वरभट्टाः । एते च प्रतिष्ठानपीठ-वास्तव्याः श्रीमदनन्तदेवभट्टाः ।

गागा० — कतरः अनयोः केशवदैवज्ञः ?

केशव० — एते हि तन्त्र-शास्त्र-पारङ्गताः निश्चलपुरी-महोदयाः । (आत्मानं निर्दिशन्) श्रीमद्दर्शनाभिलाषी जनोऽयं केशवाभिधः सांवत्सरिकाणां सुविश्रुते कुले जातः ।

निश्चल० — (साहंकारं गागाभट्टम् उद्दिश्य) नाना-शास्त्र-विशारदः भवान् इति जानीमहे । तथापि प्रभूत-कृच्छ्र-साध्याम् अस्मदीयां तन्त्र-विद्यां मनाक् जानाति भवान् न वा इति जिज्ञासामः ।

गागा० — (केशवपण्डितम् उद्दिश्य) दैवज्ञकुल-ललामभूतानां भवतां दर्शनेन नितान्तं परितुष्टाः वयम् ।

परमानन्दः — भवदागमनक्षणे राजाभिषेकोचितं मुहूर्तं चिन्तयन्तः आसन् गागाभट्टाः ।

अनन्तभट्टः — कस्मिन् खलु ग्रन्थ-विशेषे राजाभिषेक-मुहूर्तस्य निर्णयः उपलभ्येत ?

निश्चल० — कलियुगेऽस्मिन् सर्वथा निषिद्धः वैदिकः राजाभिषेकः । तान्त्रिकस्तु विहितः । तथा च उक्तम् —

> कलौ युगे नरेन्द्राणाम् अभिषेको निषिध्यते ।
> वैदिको धर्मशास्त्रोक्तस्तान्त्रिकस्तु विधीयते ॥१५॥

गागा० — (स्वगतम्) समवगाहित-सर्वशास्त्रेणापि मया न क्वचित् पठितोऽयं श्लोकः । मन्ये स्वोपज्ञः अयम् अस्य । (प्रकाशम्) केशवदैवज्ञ ! चिरकालम्लेच्छाधिपत्येन विलुप्तः सर्वथा वैदिकः राजाभिषेकः । ये चैते भारतवर्षे अग्नि-चन्द्र-सूर्य-वंशज-ब्रुवाः सन्ति

राजानः ते हि आच्छत्र-चामर-परिग्रहार्हाः मिथ्याराज-महाराजोपाधिभाजः शतशोऽथ सहस्रशः केचन भूपालाः यत्र तत्र सन्ति, ते हि क्रीडापटस्थिताः इव राजानः ।

केशव० — अभिषेकार्हस्तु एकः एव अद्वितीयः शिवराजः ।

गागा० — हन्त ! सोऽपि नाभिषिक्तः ।

परमानन्दः — अत एव —

" नाभिषिक्तोऽपि संस्कारैर्वने सिंहो मृगाधिपः ।
सह्याचलाञ्चलेऽत्रापि शिवराजो जनाधिपः ।। "

इति नटमुखेन उक्तः मया स्वाभिप्रायः ।

गागा० — राजाभिषेक-कालः विधिश्च श्रीब्रह्मर्षि-वृद्ध-वसिष्ठ-विरचितायां, वसिष्ठ-संहितायां हेमाद्रिविरचिते चतुर्वर्गचिन्तामणौ विष्णुधर्मोत्तरे च उपलभ्यते । तदनुरोधेन क्षत्रियकुलावतंसस्य दुर्दान्तयवनान्तकस्य ...

परमानन्दः — गो-ब्राह्मण-प्रतिपालनैक-महाव्रतस्य च —

गागा० — श्रुति-स्मृति-पुराणोक्त-पद्धतिम् अनुसृत्य राजाभिषेकः आयोजयितव्यः ।

निश्चल० — ( सोपहासम् ) गागाभट्ट ! वक्तुं सुकरं कर्तुं दुष्करम् । न खलु शिवराजाभिषेकः शिवलिङ्गाभिषेकवत् सुकरः ।

गागा० — (उत्थाय उच्चैः) शृण्वन्तु शृण्वन्तु भवन्तः । काशीनगरीतः अत्र महाराष्ट्रे आगतः अयं गागाभट्टः न प्रतिनिवर्तिष्यते अकृत्वा शिवराजाभिषेकम् । (निश्चलपुरीम् उद्दिश्य) वैदिकं शिवराजाभिषेकम् ।

(नेपथ्ये) सडिण्डिम-घोषं गर्जति — शृण्वन्तु शृण्वन्तु पौराः !

एषः नरवीरश्रेष्ठः, भास्वत्-कुल-ज्येष्ठः, जिजादेवीप्रेष्ठः सह्याचल-स्थेष्ठः, सकलराजवरिष्ठः, पवित्रचरित्रगरिष्ठः शिवाजिमहाराजः राजधानीतः जैत्रयात्रार्थं प्रबलाश्वानीकेन अनुगम्यमानः पौलस्त्य-पुरपार्श्वतः गच्छति। तद् अप्रमत्ताः तिष्ठन्तु सर्वे राजदर्शनाय स्वस्वोचिते स्थाने हो ऽऽऽऽ

**परमानन्दः** —(ससंभ्रमम्)बान्धवाः ! पौलस्त्यपुर-मार्गेण गच्छन् शिवराजः अवश्यमेव गुरुकुलस्य योगक्षेमं द्रष्टुम् आगमिष्यति।

अरे देवदत्त! अरे श्रीधर! अलंकुरुध्वं सर्वे गुरुकुलम् इदं पताका-तोरण-मालादिभिः। सखायः वयम् अपि सज्जीभवामः राज-संमानार्थम्।

(पटाक्षेपः)

इति शिवराजाभिषेक-नाटके पण्डितसभा नाम
द्वितीयोऽङ्कः



# तृतीयोऽङ्कः ।

[ ततः प्रविशति हीरकणिका-रत्नमाला-प्रमुखाभिः सुवासिनीभिः कुमारिकाभिश्च नीराजनाविधिना पूजितः छात्रैश्च श्रीधर-देवदत्त-प्रमुखैः "ॐ स्वस्ति साम्राज्यं भौज्यं स्वाराज्यं वैराज्यं पारमेष्ठ्यं राज्यं माहाराज्यम् आधिपत्यमयं समन्तपर्यायि स्यात् । सार्वभौमः सार्वायुष आन्तादापरार्धात् पृथिव्यै समुद्रपर्यन्ताया एकराड् इति" समन्त्रघोषं पुष्पाञ्जलिभिः समभ्यर्च्यमानः सचिवेन अनुगम्यमानः विनीतवेशः शिवराजः । ]

**सचिवः** — एतु एतु महाराजः । इदं खलु परमानन्दस्वामिनां गुरुकुलम् ।

**शिवराजः** — मोरोपन्त ! अस्य गुरुकुलस्य सर्वविध-योग-क्षेमार्थं प्रभूता दक्षिणा दीयताम् अस्मदीयात् कोषात् । सर्वथा राजकुलाद् अपि गुरुतराणि गुरुकुलानि राज्यस्य पवित्राभरणानि एव मन्यामहे ।

**मोरोपन्तः** — नचिराद् अनुष्ठीयते इयं राजाज्ञा । महाराज ! एते खलु भू-दैवतायमानाः कुलगुरु-परमानन्दम् अनुगच्छन्तः गागाभट्ट, अनन्तभट्ट, केशवदैवज्ञ, निश्चलतान्त्रिक-प्रमुखाः पण्डित-प्रकाण्डाः सपुष्पोपहाराः महाराजं सभाजयितुम् इतः एव आगच्छन्ति । तद् उपसर्पतु महाराजः गुरुकुल-सभागृहाभिमुखम् ।

(सर्वे बद्धाञ्जलयः प्रविश्य प्रार्थयन्ते)

जयतु जयतु देवः कोऽपि कैलासनाथः
सुर-गण-विपदोघ-ध्वंस-लीला-महिष्ठः ।

तदनु जयतु देवो ह्येष सह्याद्रिनाथो
जनपद-परदास्य-ध्वंस-लीला-महिष्ठः ॥ १ ॥

( सर्वे पुष्पोपहारान् विकिरन्ति विनयावनत-मूर्धनि शिवराजे )

(ततः पण्डिताः एकैकशः गन्धाक्षताभिः शिवराजं पूजयन्तः स्तुति-पदं गायन्ति । परमानन्दः प्रत्येकं सनामधेयनिर्देशं परिचाययति ।)

**परमानन्दः** — महाराज ! एते हि श्रीकाशीपुरीनिवासिनः सकल-शास्त्र-पारावार-पारीणाः वैदिकधर्म-धुरीणाः श्रीमन्तः गागाभट्ट-चरणाः महाराजम् अर्चयन्ति ।

**गागा०** — (राजानं पूजयन्) हे गुणरत्नाकर !

केचिद् वीरतयाऽपरे मृदुतया दातृत्वतः केचन
धीरत्वेन च केऽपि संप्रविदिताः कौटिल्यतोऽन्ये तदा ।
तेषां हे शिवराज ! सद्गुणनिधे ख्याताः समस्ता गुणाः
एकस्यापि गुणस्य ते न हि कलामर्हन्ति ते षोडशीम् ॥ २ ॥

हे शौर्यसागर !

हिन्दूनां चिरकालतश्च रिपुभिस्तेजः समास्कन्दितं
यन्नानाविध-दुष्ट-घोर-दमनोपायैरनातर्कितैः ।
तत् सर्वं नृवरेण येन सहसैवाविष्कृतं सर्वथा
तं त्वामत्र विलोक्य संप्रतनुते भावाभिषेकं मनः ॥ ३ ॥

हे परमाद्भुतयशोधर !

दृष्ट्वा ते सुयशोगिरिं खलु सुधा-शुभ्रं नभश्चुम्बिनं
नूनं दक्षिणभारतोत्थितममुं सर्वत्र संचारिणम् ॥
सोऽयं भूतलमानदण्डसदृशो भास्वद्विभारञ्जितः
सायं प्रातरुपेत्यहो हिमगिरिर्लज्जारुणत्वं ध्रुवम् ॥ ४ ॥

(पुष्पमालां शिवराजस्य कण्ठे समर्पयति)



पं. १२-ध्येतः पृथिव्यामेव मान दण्डः

परमानन्दः — महाराज ! एते खलु श्रीमद्गागाभट्ट-संबन्धिनः प्रतिष्ठान-क्षेत्र-वासिनः श्रीमदनन्तदेवभट्टाः महाराजं पूजयन्ति ।

अनन्तदेवः — (पूजयन्) हे महातेजस्विन् !

मत्त-म्लेच्छ-नृपस्य संमुखमहो बाल्येऽपि मानोन्नतं
तेजस्विन् स्वशिरस्त्वया नरपते ! गर्वेण नो नामितम् ।
तस्मादेव समुत्थितं चिरपदं दास्यावनम्रं शिरः
हिन्दूनां जगतीतलेऽत्र सततं जातं च मानोन्नतम् ॥ ५ ॥

हे अभिनव-नरसिंह !

दृप्तारातिविदारणं खर-नखैः कृत्वाऽत्र सन्दर्शितं
द्वाभ्यामेव हि कौशलं यदतुलं नान्येन केनापि तत् ।
आदौ दुष्ट-हिरण्य-दैत्य-हनने साक्षान्महाविष्णुना
तत्पश्चाद् अफझुल्लराक्षसवधे श्रीमच्छिवेन त्वया ॥ ६ ॥

(पुष्पमालां समर्पयति)

परमानन्दः — महाराज ! एते हि ज्योतिःशास्त्र-विशारदाः करण-कौस्तुभादि-ग्रन्थप्रणेतारः कोङ्कण-वास्तव्याः श्रीमत्-केशवदैवज्ञाः महाराजं पूजयन्ति )

केशव० — हे अद्भुतानुभाव !

संग्रामे तव वाजि-राजि-खुर-संपातैः समुत्थापितैः यतिभङ्गः/
मेघोन्मेदुर-भूरि-धूलि-पटलैः किं किं न कृष्णीकृतम् ?
बिम्बं भानुमतो दिशश्च सकला म्लेच्छाधिपास्यश्रियः
-किन्त्वेकं भृशमुज्ज्वलं समभवद् राजंस्त्वदीयं यशः ॥ ७ ॥

हे योगिराज !

याताः काश्चन योगिनां व्रतवतां वामभ्रुवः संमुखं
कामं कामहुताशने निपतितं तेषां मनश्चञ्चलम् ।

नीता म्लेच्छवधूस्तवापि पुरतस्तारुण्यरूपान्विता
सा मातेव मता नृपेण भवता तद् योगिराजो भवान् ॥ ८ ॥

परमानन्दः — महाराज! एते हि निश्चलपुरी-नामानः गोस्वामिनः तन्त्रविद्या-पारङ्गताः महाराजं पूजयन्ति ।

निश्चलपुरी — हे अभिनव-महारुद्र !

स्वातन्त्र्य-प्रभया युतो लसदसिव्याघाततस्ते प्रभो
संजातः खलु कोऽपि सह्य-शिखरे दीप्तः स्फुलिङ्गो महान् ।
म्लेच्छानां प्रबलं समग्रमपि तत् साम्राज्यमेव ग्रसन्
घोरत्वं स बिभर्ति दुर्धरतमं शंभोः शराग्नेर्ध्रुवम् ॥ ९ ॥
किं विद्युच्चिरपारतन्त्र्य-तमसां विध्वंसिनी भास्वरी
मृत्योर्वा रसना प्रमत्त-यवन-ग्रासैक-बद्ध-स्पृहा ।
किं स्वातन्त्र्य-पथ-प्रदर्शनकरी तेजोनिधेस्तर्जनी
त्वद्दोर्दण्डगता सविस्मयमसौ दृष्टा भवानी जनैः ॥१०॥

परमानन्दः — भगवन् । सर्वथा स्वातन्त्र्याय एव लोकानां समवतीर्णोऽसि भूतले !

दिल्लीशेन नृपाधमेन कपटैः केनापि दुर्हेतुना
निर्बद्धो ह्यसहिष्णुना बत भवान् कारागृहे भीषणे ।
नो तत्रापि शशाक रोद्धुमसकौ मूढो भवन्तं बलात्
वस्त्रे केन कदापि दीप्र-खदिराङ्गारो निबद्धः क्षणम् ॥११॥

तथा च कार्याकार्य-विवेक-मूढानां प्रबोधनाय गीतायते खलु स तव संदेशः । —

कार्याकार्य-विवेक-मूढ-मनसं बोद्धुं यथा भारतं
श्रीकृष्णेन निवेदिता भगवता गीता जगद्-बोधिनी ।
उद्बोद्धुं जयसिंहमप्यथ तथाभूतं तथैव त्वया
संदेशः प्रहितः प्रबोधयति किंकर्तव्य-मूढान् जनान् ॥१२॥

(सर्वे गुरुकुलच्छात्राः संभूय गायन्ति)

दास्य-ध्वान्त-विनाशनाम्बरमणिर्दातृत्व-चिन्तामणिः
देवी-कण्ठमणिश्च भोसल-महावंशैक-मुक्तामणिः ।
पुण्यश्लोकशिरोमणिर्जगति यः सत्कीर्ति-तारामणिः
श्रीमच्छत्रपतिश्चिरं विजयतां स्वातन्त्र्य-वीराग्रणीः ॥१३॥

शिवाजिः — (सविनयं प्रणामाञ्जलिं रचयन्) नितरां खलु अनुगृहीतोऽस्मि । ज्ञानतपोनिधीनां भवतां कृपाशीर्वचनैः एवमेव निरंतरं वर्धताम् अनुग्रहः जनेऽस्मिन् भूदेवानाम् । सतत-समरासक्ततया दुर्लभः अस्मिन् जन्मनि जातः विद्या-व्रतस्थैः सह समालापः ।

गागाभट्टः — महाराज ! काशीक्षेत्राद् आगतोऽयं जनः ।

शिवाजिः — ज्योतिर्लिङ्ग-स्वरूपिणः भगवतः विश्वेश्वरस्य अधिष्ठान-पीठं खलु काशी-क्षेत्रं यत्रत्याः धूलि-कणिकाः अपि शिरोधार्याः मन्यामहे । निधानं खलु पावित्र्यस्य काशीक्षेत्रम् ।

यत्र वारीणि तीर्थानि शर्कराः शिव-पिण्डिकाः ।
द्रुमाः कल्पद्रुम-प्रख्या वृषास्ते नन्दिकेश्वराः ॥१४॥
मठे मठे धर्मपीठं विद्यापीठं गृहे गृहे ।
यत्राद्भुतं शक्तिपीठं सती-कुण्डल-मण्डितम् ॥१५॥
स्नानं ध्यानं जपो दानं भगवद्-गुण-कीर्तनम् ।
गंगा-सोपान-खण्डेषु यत्राखण्डं प्रवर्तते ॥१६॥

ईदृशं काशीक्षेत्रं संततं स्मरामः वयम् अन्तःकरणे ।

मोरोपन्तः — महती खलु महाराजानां काशीक्षेत्रे भक्तिः । परम् एतावता कालेन म्लेच्छ-दास्यतः न तद् विमोचितम्......

शिवाजिः — इत्येतद् महद् दुःखम् अनुभवामः । विशेषतश्च आगरा-कारास्थितः अस्मन्निर्गमप्रकुपितेन औरङ्गजेबेन भगवतः

विश्वेश्वरस्य महामन्दिरं निःपातितम् इति वृत्तान्तं निशम्य वज्राहतम् इव हृदयम् अस्मदीयम् ।

**गागाभट्टः** — महाराज! पारतन्त्र्याहतस्य राष्ट्रस्य दैवतानि अपि अवगण्यन्ते । अस्मत्-पूर्वजैः प्रतिष्ठापितं तज्ज्योतिर्लिङ्गम् । नितान्तं दुःखम् अनुभवामः अनेन वज्राघातेन ।

**अनन्तभट्टः** — नूनं पादप्रहारः अयं प्रदत्तः पारतन्त्र्याहतस्य हिन्दुसमाजस्य मस्तके म्लेच्छाधिपाधमेन ।

**निश्चलपुरी** — महाराजः एव एकलः समर्थः प्रतिशोधे अस्य स्वधर्मावमानस्य ।

**शिवाजिः** — (क्षणम् अक्षिणी निमील्य) यवनाधिराज्याद् विमोचितायां काशी-नगर्यां भगवतः विश्वेश्वरस्य रत्नाभिषेकं यथावसरं कर्तुम् आकाङ्क्षामः ।

**परमानन्दः** — को हि नाम अस्मिन् भूतले महाराजस्य आकाङ्क्षां निरोद्धुं प्रभवति ?

> महार्णवस्य कल्लोलं महावीरस्य काङ्क्षितम् ।
> निरोद्धुमिह कः शक्तो मानवो दानवोऽथवा ॥१७॥

**गागाभट्टः** — (साकूतम्) महाराज ! देवानाम् अभिषेकः न तथा दुष्करः यथा नरदेवानाम् ।

**अनन्तदेवभट्टः** — चिराय सर्वत्र प्रवितते अपि म्लेच्छ-साम्राज्ये मन्दिरे मन्दिरे यथाविधि देवानाम् अभिषेकाः प्रावर्तन्त एव । नरदेवानां तु न क्वापि कदापि समपद्यत ।

**निश्चलपुरी** — अहो गागाभट्ट ! अस्मिन् कलियुगे हि वैदिकेन विधिना देवानाम् एव अभिषेकः विहितः, न नरदेवानाम् । अपि च

> चिरस्य दास्याभिहतेऽत्र राष्ट्रे को नाम जातः खलु वीरवर्यः ।
> म्लेच्छाधिपत्यं विनिपात्य येन कृतः स्वधर्मध्वज उत्प्रतिष्ठः ॥१८॥

**गागाभट्टः** — सम्यग् आह भवान्। परम् अतीतः सः कालः इदानीम् शिवराज्योदयेन।

**अनन्तभट्टः** — महाराज! एते हि श्रीमद्गागाभट्टमहोदयाः मीमांसक-मूर्धन्याः सन्ति। एभिः महता प्रयत्नेन राजाभिषेक-प्रयोग-विषयकः कोऽपि अपूर्वः ग्रन्थः विरचितः।

**शिवाजिः** — भट्टपादैः कुमारिलभट्टानाम् अपूर्णं श्लोकवार्तिकं संपूर्णतां नेतव्यम् इति सविनयम् अभ्यर्थयामहे। कुमारिलभट्टानां तम् अपूर्णं ग्रन्थं संपूर्णतां नेतुं भट्टपादाः एव समर्थाः।

**गागाभट्टः** — महाराज! सर्वथा शिरोधार्यः अयं श्रीमदादेशः। अवश्यं श्रीमत्-कुमारिलभट्टानाम् अपूर्णं श्लोक-वार्तिक-ग्रन्थं संपूर्णतां नेष्यामः। परन्तु!

**परमानन्दः** — उच्यताम् उच्यताम् स्वाभिप्रायः। अवश्यम् एव महाराजः तं पूरयिष्यति।

**निश्चलपुरी** — (सोपहासम्) न जातु निष्फलं क्लेशबहुलं कार्य-जातम् अङ्गीकुर्वन्ति पण्डिताः काशीवासिनः।

**शिवाजिः** — न जातु महनीयं धर्मकार्यं च निष्फलं भविष्यति स्वराज्ये।

**गागा०** — महाराज! अलम् अन्यथा गृहीत्वा। न कदापि धना-भिलाषेण वाङ्मयोपासनायां प्रवर्तामहे।

**परमानन्दः** — महाराज! सर्वथा तथ्यं खलु वदन्ति भट्टपादाः। न हि तादृशी भट्ट-कुलस्य परिपाटी।

**अनन्तभट्टः** — महाराज! गागाभट्टानां पूर्वजैः विलिखिताः प्रभूताः ग्रन्थाः विद्वत्-समाजे परमप्रमाणभूताः सन्ति। तथा हि एतेषां प्रपिता-महेन नारायणभट्टेन मार्तण्डाभिधाः द्वादशग्रन्थाः तथा धर्मप्रवृत्ति-प्रयोगरत्नाख्यम् अपरं प्रमाणभूतं ग्रन्थद्वयं विरचितम्। पित्रा महेन

रामकृष्णभट्टेन तन्त्रवार्तिकव्याख्या तथा ज्योतिष्टोमपद्धतिश्च इति ग्रन्थरत्न-द्वयं प्रणीतम् । नीलकण्ठभट्टेन पितामहस्य भ्रातृव्येन द्वादशमयूखाभिधाः ग्रन्था विलिखिताः (पितृचरणैश्च दिनकरभट्ट-महोदयैः दिनकरोद्योत-संज्ञाः द्वादश-ग्रन्थाः तथा धर्मशास्त्रज्ञानां प्रमाणभूतः निर्णयसिन्धुश्च विरचितः । गागाभट्टानां च भट्ट-चिन्तामणिर्नाम न्यायशास्त्र-विषयकः ग्रन्थः अन्ये च ग्रन्थोत्तमाः कुलपरम्परागतां पाण्डित्य-कीर्तिम् उद्योतयन्ति ।

**शिवाजिः** — अहो महनीया पाण्डित्य-परम्परा! सर्वथा तथ्यमिदं सुभाषितं यत् —

> संपद्-विभव-संपन्नो न राजा राजते तथा ।
> विद्या-विभव-संपन्नो यथा राजति पण्डितः ॥१९॥

**गागा०** — महाराज ! अतिघोरे पारतन्त्र्यकाले न खण्डिता पण्डितानां परम्परा राष्ट्रेऽस्मिन् । बहवः किल पण्डिताः भूताः भविष्यन्ति च । परं भवादृशः वीरः धीरः धुरीणः धर्मोद्धर्ता लोकत्राता, चिरात् खलु न जातः भारतेऽस्मिन् । हे महापुरुष ! चिर-पारतन्त्र्य-तमोग्रस्तेऽस्मिन् भारतवर्षे त्वयैव खलु समुद्दीपितं स्वातन्त्र्य-तेजः । त्वयैव खलु संस्थापितं स्वराज्यम् । त्वमेव खलु तत्त्वतः राजा ।

> अल्पिष्ठ-सैन्य-कोशेन त्वयैकेनासुहृद्वता ।
> म्लेच्छाधिपतयः सर्वे जिताः प्राग् अपराजिताः ॥२०॥

> शत्रुसेनारजःस्तोमैर्नितरां मलिनीकृतः ।
> धर्मध्वजः स काषायस्त्वद्वीर्येणोज्ज्वलीकृतः ॥२१॥

> म्लेच्छाधमैर्ध्वंसितानि मन्दिराणि सहस्रशः ।
> देवगृहाः पराक्रमेणोत्थापितानि पुनस्त्वया ॥२२॥

सद्धर्मनीतिमर्यादा उत्सन्ना धर्मशत्रुभिः ।
स्थापितास्ता यथापूर्वं शुभाचारवता त्वया ॥२३॥
पतिव्रतानां पावित्र्यं यदासीद् असुरक्षितम् ।
तद्रक्षणेऽधुना नूनं त्वत्तेजः कवचायते ॥२४॥
परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।
धर्मसंस्थापनार्थाय त्वत्समो नापरोऽधुना ॥२५॥
अष्टानां लोकपालानां तेजो यल्लोकपालनम् ।
क्षत्रियोत्तंस तत् सर्वं पश्यामि त्वयि पिण्डितम् ॥२६॥
वेद-वेदान्त-विज्ञानां कवीनां च कलावताम् ।
शिल्पिनां धर्मवीराणां नाश्रयस्त्वद्विनाऽपरः ॥२७॥
यागैर्योगैर्व्रतैः कृच्छ्रैर्यन्मया पुण्यमर्जितम् ।
तत्फलं खलु संप्राप्तं दृष्ट्वा त्वां पुरुषोत्तमम् ॥२८॥
परन्तु व्यथते चेतो मनाङ्मम यशोनिधे ।
अस्वर्णासनमच्छत्रं विलोक्य त्वाम् अचामरम् ॥२९॥
नितान्तम् अभिषिक्तोऽपि लोकसद्भावनामृतैः ।
हा हन्त नाभिषिक्तोऽसि विधिवत् तीर्थवारिभिः ॥३०॥
विक्रमार्जित-भूखण्डो राजदण्डधरोऽपि सन् ।
राजाऽप्यराजो राष्ट्रेऽस्मिन् यावन्नैवाभिषिच्यते ॥३१॥

परमानन्दः — महाराज! न कदापि निराकृता सत्पुरुषाणाम् अभ्यर्थना महाराजेन।

अनन्त० — न केवलं भट्टपादानाम् एव इयम् अभ्यर्थना अपि तु सर्वेषाम् एव स्वातन्त्र्यप्रेमिणां लोकानाम् ।

केशव० — मन्ये साक्षात् काशीविश्वेश्वरस्य अभिलाषः स्फुटीभूतः भट्टपादानाम् अनेन वचनोद्गारेण ।



शिवाजिः — भो भो भूदेवाः ! यद् यद् भगवान् इच्छति तत्तदेव

भवति इति बाढं श्रद्दध्महे। यदि विश्वेश्वरः साक्षाद् अस्मदभिषेकं वाञ्छति तर्हि अवश्यं स संपद्येत एव।

गागा० — नितान्तं परितुष्टः अयं जनः महाराजस्य अनेन अनुमोदनेन।

शिवाजिः — पण्डितश्रेष्ठ! आबाल्याद् मातृदेवः अयं जनः। तद् यदि मम माता जिजाम्बा राजाभिषेक-विधिम् अनुमोदेत तर्हि तन्मनोरथानुरूपः स शुभे मुहूर्ते संपद्येत इत्येव इदानीं सङ्ग्रामयात्रावसरे प्रतिपद्यामहे।

(नेपथ्ये – रण-तूर्य-निनादः) (आकर्ण्य) (प्रणामाञ्जलिं बद्ध्वा) अनुजानन्तु मां गमनाय भूदेवाः। इदानीं निःस्वनन्ति रणतूर्याणि आह्वयन्तीव अस्मान् रणोत्सवाय।

सर्वे — (हस्तम् उद्यम्य आशीर्वचनं गर्जन्ति)

शतं जीव शरदो वर्धमानः शतं हेमन्ताञ्छतमु वसन्तान्।
शतमिन्द्राग्नी सविता-बृहस्पतिः शतायुषा हविषेमं पुनर्दुः॥
आहार्षं त्वाविदं त्वा पुनरागाः पुनर्नव।
सर्वाङ्ग सर्वं ते चक्षुः सर्वमायुश्च तेऽविदम्॥

(शिवाजिः उपवस्त्रे मन्त्राक्षताः संगृह्णाति।)

सर्वे — श्रीर्वर्चस्वमायुष्यमारोग्यमाविधाच्छोभमानं महीयते।
धान्यं धनं बहुपुत्रलाभं शतसंवत्सरं दीर्घमायुः॥
आशीर्वादाः सफलाः सन्तु पूर्णाः सन्तु मनोरथाः।
शत्रूणां नाशनं चास्तु मित्राणाम् उदयस्तव॥

शिवाजिः — वरः खलु अयं न केवलम् आशीः। तद् गच्छामः वयं पुनर्दर्शनाय। (पटाक्षेपः)

इति श्रीशिवराजाभिषेके नाटके महाराजानुमोदनं नाम तृतीयोऽङ्कः समाप्तः।

# चतुर्थोऽङ्कः।

(ततः प्रविशति पञ्चवर्षदेशीयं राजकुमारं क्रीडयन्ती हीरकणिका)

हीरकणिका — एतु एतु कुमारः ! क्रीडतु कुमारः अनेन डित्थेन रत्नमण्डितेन। (इति काष्ठमयं हस्तिनं दर्शयति।)

कुमारः — (सरोषम् इव) हीरकणिके ! नाहं क्रीडामि अनेन डित्थेन। गन्धगजम् आरुह्य अहं परिभ्रमितुम् इच्छामि। तद् आनय शीघ्रं गन्धगज-शावम् एकं मदर्थे। अन्यथा —

हीर० — अन्यथा किम् ? (अन्यतः अवलोक्य ससंभ्रमम्) अये अयं शंभुराजः व्याघ्र-शावं स्कन्धे निधाय आगतः। तत् किम् इदानीं करोमि ?

(सभयं कुमारम् आश्लिष्यन्ती) जयतु जयतु युवराजः ! जयतु जयतु शंभुराजः !

शंभुराजः — (व्याघ्र-शावं लालयन्) हीरकणिके ! किमिति सरोष-नयनः दृश्यते भ्राता मे प्रियदर्शनः राजारामः ?

हीर० — युवराज ! विजययात्रार्थं प्रस्थितस्य महाराजस्य निर्विघ्न-जयमङ्गलार्थं शिवाराधने निमग्न-हृदया जिजाम्बा कुमारं क्रीडयितुं माम् आदिशत्।

शंभु० — ततः किम् ?

हीर० — ततः रत्नमण्डितम् एनं डित्थम् आदाय यावत् कुमारं प्रमोदयामि तावत् —

कुमारः — आर्य ! गन्धगजम् आरोढुम् इच्छामि। न पुनरिदं काष्ठमयं क्रीडनकम्।

शंभु० — वत्स ! शीघ्रम् एव संचरिष्यसि मतङ्गगजाधिरूढः

सहस्र-शिखरावलि-मण्डितं समग्रं महाराष्ट्रदेशम् । सर्वथा दुरारोहः अयम् अस्माकं रायगिरिः मतङ्गजानाम् । पश्य —

प्रभवन्तीह नारोढुं तरलास्तुरगा अपि ।
किं पुनर्हस्तिनः स्थूलाः स्वर्लोकमिव पापिनः ॥१॥

हीर० — युवराज ! किमिह दुर्घटं महाराजस्य येन हि —

सह्याचलस्य शिखरेऽपि नितान्ततुङ्गे
रम्यालकेव रचिताऽद्भुत-राजधानी ।
किं सोऽत्र राजविभवास्पदमद्वितीयं
नारोपयिष्यति मगङ्गजमप्यकस्मात् ॥२॥

शंभु० — हीरकणिके ! गजराज-विनाकृताम् एनां नव-राजधानीं विलोक्य प्रेरिता उद्घोषणा जिजाम्बया सर्वत्र ।

कुमारः — हीरकणिके ! अहं ते श्रावयामि ताम् उद्घोषणाम् ।

[illegible]० — (सकुतूहलम्) श्रावयतु, श्रावयतु कुमारः !

शंभु० — अहमपि श्रोतुम् इच्छामि ।

कुमारः — (उच्चैः स्वरम् आलब्य) शृण्वन्तु शृण्वन्तु सर्वे बलशालिनः । यः कोऽपि गजराजं राजधानीम् प्रापयिष्यति स हि गजाध्यक्षपदं प्राप्स्यति स्वराज्यस्य ।

( नेपथ्ये — सतूर्यघोषं लोकगर्जना — जयतु गजराजः ! जयतु गजराजः ! ) ( प्रविश्य सहर्षं शर्करापात्रहस्ता रत्नमालिका — )

रत्नमालिका — जयतु युवराजः ! जयतु कुमारः । हीरकणिके ! अद्य रायगिरौ राजधानीं साक्षात् गजलक्ष्मीः प्रविष्टा इति नितान्तं हर्षितहृदया जिजादेवी । तदादेशाद् एव अत्र राजप्रासादे शर्करा-प्रदानैः मुखानि मधुरीकरोमि सर्वेषाम् ।

शंभु० — प्रथमं गजराजाभिलाषिणः वत्सस्य राजारामस्य वदनं

मधुरीकुर्मः शर्कराभिः। ( सर्वे राजाराम-मुखं शर्कराभिः आपूरयन्ति । रत्नमालिका निर्गच्छति सत्वरम्)

कुमारः — आर्य ! शंभुमहाराज ! विजययात्रायाः प्रत्यागच्छतां तातपादानाम् अभिनन्दनार्थम् उभावपि आवां गजराजम् आरुह्य अग्रे गमिष्यावः। हीरकणिके ! कदा आगमिष्यन्ति रणविजयिनः तातपादाः ?

शंभु० — कुमार! युद्ध-प्रस्थितानां तातपादानां सर्वमेव भूतं भविष्यन्तं च दैनंदिनम् उदन्तजातं जिजाम्बा एव जानाति चारमुखेन। तद् एहि तदन्तिकम् एव गच्छावः। (कुमारं स्वस्कन्धे निधाय गच्छति। )

कुमारः — (सहासम् ) हीरकणिके ! पश्य, पश्य ! गजारोहणानन्दम् अनुभवामि। तं च डित्थम् आरुह्य त्वं माम् अनुसर जिजाम्बा-सदन-पर्यन्तम्। (इति उच्चैः हसति)

( इति विष्कम्भकः। )

[ ततः प्रविशति अङ्काधिरूढं कुमारं लालयन्ती, शंभुराजेन वीज्यमाना जिजादेवी रामायण-कथां शुश्रूषमाणा ]

ब्राह्मणः — ( सस्वरं पठति )

पीयूषादपि मधुरा महार्णवादपि नितान्त-गम्भीरा।
सुरुचिर-करुणोद्गारा धर्मपरा जयति कापि राम-कथा ॥३॥

सूर्याचन्द्रमसौ यावद् यावद् गिरि-सरित्-कुलम्।
जगदानन्दयेत् तावत् श्रीराम-चरितामृतम् ॥ ४ ॥

जिजा० — उपाध्याय-महाभागाः ! युद्धकाण्डस्य उपान्त्यः सर्गः खलु समाप्तः गतदिने ।

ब्राह्मणः — मातः। अद्य तु अन्तिमः अष्टाविंशत्यधिकशततमः

राज्याभिषेकवर्णनस्य सर्गः प्रारब्धव्यः, यस्मिन् शान्तिसुखमयस्य रामराज्यस्य हृदयंगमं वर्णनं महर्षिणा कृतम् ।

शंभु०—अम्ब! रामराज्यस्यैव हृदयंगमं वर्णनं श्रोतुमिच्छामि ।

जिजा०—उपाध्यायमहाभागाः । तद् आरभ्यतां रामराज्यस्य वर्णनम् ! सर्वथा आदरणीयः बालानां प्रणयः गृह-ज्येष्ठैः ।

ब्राह्मणः—यद् अम्बा आदिशति तत् पठामि इदं रामराज्य-वर्णनम् । ततः पठिष्यामि राज्याभिषेक-वर्णनम् । ( रामायणग्रन्थं प्रणम्य – सस्वरं पठति । )

"अहन्यहनि रामस्तु कार्याणि स्वयमेव हि ।
प्रत्यवेक्षत धर्मात्मा सहभ्रातृभिरच्युतः ॥
धर्मेण रक्षतस्तस्य हृष्ट-पुष्ट-जनाकुला ।
बभूव पृथिवी सर्वा धन-धान्य-समृद्धिनी ॥
निर्दस्युरभवल्लोको नानर्थः कश्चिदस्पृशत् ।
न चापि वृद्धा बालानां प्रेतकार्याणि कुर्वते ॥
सर्वं प्रमुदितं चासीत् सर्वो धर्मपरो जनः ।
दृष्ट्वा धर्मपरं रामं न चाहिंसत् परस्परम् ॥
आसीद् वर्षशतायुश्च तथा पुत्रसहस्रवान् ।
निरामयो विशङ्कश्च रामे राज्यं प्रशासति ॥
नित्यपुष्पा नित्यफलास्तरवस्तत्र निर्व्रणाः ।
काले वर्षति पर्जन्यः सुखस्पर्शश्च मारुतः ॥
न कदर्यः कश्चिदासीन्नानृतो न शठोऽपि वा ।
न मानी न च संरम्भी न नृशंसो न कत्थनः ॥
नराः स्वदारनिरता नार्यश्चासन् पतिव्रताः ।
सुव्रता धृतिमन्तश्च नरा आसंस्तथा स्त्रियः ॥

नानाहिताग्निर्नायज्वा नानृजुर्न च नास्तिकः।
स्वकर्मनिरताश्चासन् सर्वे तत्र द्विजातयः॥
यज्ञाध्ययननिष्ठाश्च विरताश्च परिग्रहात्।
नामर्षी च न चोद्विग्नो नातुरो न भयान्वितः॥
तथैव प्राकृतो नासीद् दरिद्रो वा पुरोत्तमे॥

हीरकणिका—(सहसा प्रविश्य) जयतु जयतु अम्बा! जयतु युवराजः! जयतु कुमारः! अम्ब! महाराजादेशम् अनुसृत्य गागाभट्ट-प्रमुखाः महापण्डिताः कुलगुरु-परमानन्द-पुरस्सराः अत्र आगताः।

जिजादेवी — उपाध्याय-महाभागाः! शिष्टागमने अनध्यायः। अद्य एतावदेव अस्तु रामायण-पारायणम्। यथावसरं राजाभिषेकवर्णनं श्रोष्यामः।

(ततः प्रविशति पण्डितमण्डली सर्वे उत्तिष्ठन्ति। शंभुराजः राजारामं गृहीत्वा निर्गच्छति।)

परमानन्दः — ( प्रविश्य ) आगच्छन्तु आगच्छन्तु भट्टपादाः। आगच्छन्तु अनन्तदेवभट्ट-महोदयाः।

सर्वे — जयतु जयतु राजमाता! जयतु जिजादेवी! जयतु स्वराज्य-स्वामिनी!

जिजादेवी — (बद्धप्रणामाञ्जलिर्भूत्वा)

वर्णाश्रमाचार-निष्ठान् वेदशास्त्रपरायणान्।
महर्षीनिव पूज्यान् वः प्रणमामि द्विजोत्तमान्॥ ५॥

गागाभट्टः — (आशीरर्थं बाहू उत्थाप्य)

श्रीरामस्येव कौसल्या श्रीकृष्णस्येव देवकी।
जननी शिवराजस्य विश्व-वन्द्या भविष्यसि॥ ६॥

**परमानन्दः** — अम्ब ! (सर्वान् क्रमशः निर्दिशन् परिचाययति।) एते काशीपुरी-वासिनः गागाभट्टचरणाः। एते प्रतिष्ठान-क्षेत्र-वासिनः अनन्तदेवभट्टमहोदयाः। एते कोङ्कणवासिनः केशवदैवज्ञ-महाशयाः। एते च निश्चलपुरीगोस्वामिनः।

**जिजादेवी** — नूनम् अलङ्कृतः अयं राजप्रासादः पण्डितवरेण्यानाम् अभ्यागमनेन।

स भाग्यदिवसो नूनं पर्वकालोऽथवा शुभः।
यदाऽकस्मादिवायान्ति गृहं विद्या-विभाकराः ॥ ७ ॥

**गागाभट्टः** — मातः क्षम्यतां तावदयं रामकथा-रसास्वाद-विघ्न-भूतः अयम् अस्माकम् आकस्मिकः अभ्यागमः।

**परमानन्दः** — मन्ये रामराज्यस्य वर्णनं प्रस्तुतम् आसीत्।

**अनन्तभट्टः** — तत् किं समाप्तः राजाभिषेकः ?

**जिजादेवी** — नहि नहि। भविष्यति यथावसरं राजाभिषेकः।

(सर्वे परस्परं साकूतं वीक्षन्ते।)

**गागाभट्टः** — अम्ब ! एतदर्थमेव वयमत्र समागताः।

**जिजादेवी** — (सचकितम्) किमर्थम् ?

**सर्वे** — राजाभिषेकार्थम्। राजाभिषेकार्थम्।

**जिजादेवी** — क्षम्यतां मे जिज्ञासा। न मया सम्यग् अवधारितः भवतां वचनाभिप्रायः।

**गागाभट्टः** — न निगूढाभिप्रायं वचनम् अस्माकम्। तथा हि —

निर्दलितासुरबलस्य रघूत्तमस्य
राजाभिषेकमकरोत् स मुनिर्वसिष्ठः।
तद्वद् विमर्दितरिपोरधुना शिवस्य
मातश्चिकीर्षति सुतस्य तवैष विप्रः ॥ ८ ॥

**निश्चलपुरी** — अहमपि शिवराजाभिषेकं कर्तुमिच्छामि तन्त्र-शास्त्रानुसारम् ।

**परमानन्दः** — अम्ब ! अस्मदीयं गुरुकुलं जैत्रयात्रा-प्रस्थानावसरे यदृच्छया समागतेन महाराजेन सह मन्त्रितः अयं विषयः अस्माभिः ।

**जिजादेवी** — ज्ञातः स वृत्तान्तः मया चारमुखेन तदानीमेव ।

**केशवदैवज्ञः** — केवलं भवदादेशम् एव प्रतीक्षते विषयः अयम् । महाराजस्य आनुकूल्यं विज्ञाय मौहूर्तिकेन मया शुभमुहूर्तः अपि सम्यग् विमृश्य निर्धारितः ।

**शंभुराजः** — ( प्रविश्य सर्वान् सविनयं प्रणम्य ) अम्ब ! विजय-यात्रां परिसमाप्य प्रतिनिवृत्ताः तातचरणाः प्रवेगेन अश्वानीकेन सह नचिरादेव राजधानीं प्रत्यागमिष्यन्ति इति वार्ता चारेण निवेदिता । तन्मतङ्गजारोहण-मनोरथं राजारामस्य पूरयितुं पौलस्त्यपुर-पर्यन्तं गच्छामि गजराजम् आरुह्य तात-चरणानां वन्दनार्थम् ।

**जिजादेवी** — अहो सुदिवसः अद्य । भो भो ब्राह्मणाः! कलियुग-कंसासुरस्य औरङ्गजेबस्य कारालयात् प्रत्यागतेन शिवराजेन शत्रु-शासनायत्तीभूतं समग्रम् अपि स्वराज्यं पुनरपि नचिरात् प्रतिष्ठा-पितम् । कुण्ठितं च विजापुराधीशस्य दिल्लीपतेश्च समग्रम् अपि सामर्थ्यं स्वबाहुबलेन । निष्कण्टकम् इव कृतं सकलमपि स्वराज्यम् । तथापि —

**गागा०** — तथापि किम् ?

**जिजा०** — हा हन्त ! अस्मदीया अपि केचन न प्रमाणीकुर्वन्ति शिवस्य राजशासनम् ।

**गागाभट्टः** — वेदोक्त-राजाभिषेकान्ते सर्वे प्रमाणीकरिष्यन्ति शासनं महाराजस्य ।

निश्चल० — ननु तन्त्रोक्त – राजाभिषेकान्ते इति वक्तव्यम् ।

जिजा० — गागाभट्ट ! यदि एवं माहात्म्यं राजाभिषेकस्य, तर्हि अनुमन्ये अहम् शिवस्य राजाभिषेकम् । (उच्चैः) नचिरादेव अत्र रायगिरौ संपद्येत अभूतपूर्वः शिवराजाभिषेकस्य महोत्सवः ।

उपाध्यायः — अम्ब ! युद्धकाण्डस्य अन्तिमे सर्गे वर्णितः राजाभिषेकः कदा —

जिजा० — उपाध्याय ! साम्प्रतिकं युद्धकाण्डं परिसमाप्य प्रत्यागतेन शिवराजेन सह एव श्रोतव्यः सः प्रभोः रामचन्द्रस्य राजाभिषेकः ।

(पटाक्षेपः)

इति शिवराजाभिषेके नाटके "मातृसंमतिः" नाम चतुर्थोऽङ्कः ।



# पञ्चमोऽङ्कः ।

(ततः प्रविशति हीरकणिकया निर्दिश्यमान-वेध्यः चापारोपित-शरः राजारामः)

**राजारामः** —हीरकणिके ! पश्य, पश्य ! इदानीम् एव तरुशाखा-शिखरस्थं नारिकेलफलं झटिति छिनद्मि बाणेन अनेन ।

**हीरकणिका** — मुञ्चतु मुञ्चतु कुमारः शरकाण्डम् । एवं धनुरा-रोपित-बाणः हि कुमारः —

धुन्वन् मुहुः समुपकुञ्चितकोटियुग्मम्
संस्थापित-स्थिर-शरं धनुराततज्यम् ।
आमीलितैक-नयनश्चल-लक्ष्य-वेधी
नूनं शिवात्मज-कुमार इवातिभाति ॥ १ ॥

**राजारामः** —हीरकणिके ! त्वं 'हर हर महादेव' इति गर्जनां कुरु ।

**हीरकणिका** — ततः किं भवेत् ?

**राजारामः** — ततः हि यावत् त्वं मऽहाऽदेऽव इति अन्तिमम् अक्षरम् उच्चारयसि तावदेव अहं बाणेन फलं पातयामि । (लक्ष्याभिमुखं शरम् आरोपयन्) हीरकणिके ! हुम्— ।

**हीरकणिका** — हुम् । ननु भणामि यथा आदिष्टम् । हऽर हऽर मऽहाऽऽदेऽऽऽव । (राजारामः सहसा बाणं मुञ्चति । ततः प्रविशति शंभुराजः प्रत्यग्रच्छिन्नं नारिकेलम् आदाय ।)

**शंभुराजः** — अहो लक्ष्य-वेध-कौशल्यं राजारामस्य ! हीरकणिके ! सर्वथा यथार्थनामा अयम् अस्माकं राजारामः राजा राम इव धनुर्विद्या-कौशल्येन । वत्स ! गृहाण फलमिदं धनुर्वेध-कौशल्यस्य । (इति नारिकेलफलम् अर्पयन् तम् आश्लिष्य मूर्धानम् अवजिघ्रति । )



(राजारामः कोदण्ड-क्रीडाम् अभ्यस्यति ।)

हीर० — युवराज ! मन्ये जन्मसिद्धं खलु शस्त्रास्त्र-कौशल्यं सूर्य-वंशजानां कुमाराणाम् ।

शंभुराजः — हीरकणिके ! शैशवे एव शब्दवेधेऽपि नैपुण्यं संप्राप्तम् आसीत् तातचरणैः इति जिजाम्बा माम् अकथयत् । अस्तु । इदं तावत् पृच्छामि — किम् अयम् अकाण्डे एव कोदण्ड-क्रीडाऽध्यवसायः वत्सस्य ?

हीरकणिका — शृणोतु युवराजः ! अत्र हि रायगिरौ गागाभट्ट-प्रमुखाः महापण्डिताः आगताः नव-वर्षारम्भ-मङ्गलदिने ।

शंभु० — दृष्टा मया ते भूदेवाः जगदीश्वर-मन्दिरे रुद्राभिषेक-विधि-निमग्नाः ।

हीरकणिका — तैश्च सुवर्ण-सिंहासनाधिरूढानां महाराजानां प्रभु-रामचन्द्रवत् राजाभिषेकः भवतु इति जिजाम्बा संप्रार्थिता ।

शंभु० — काशीपुरीवासिनां गागाभट्टानां सः शुभ-संकल्पः श्री-विश्वनाथस्य आदेशः इति श्रद्धया शिरसा अभिनन्दितः जिजाम्बया इति अहं जानामि ।

राजारामः — आर्य ! अस्माकं जिजाम्बा यद् यद् इच्छति तत् सर्वं तथैव भवति ।

शंभु० — वत्स ! कोऽत्र संशयः ? जिजाम्बा एव स्वराज्यस्य अधिदेवता । वयं तु तस्याः किंकराः इति तातचरणाः वदन्ति ।

हीर० — पर्णालपर्वत-विजययात्रां परिसमाप्य सकुशलं प्रत्यागताः महाराजाः । नचिरात् च तेषां सुवर्ण-सिंहासनाध्यारोहण-महोत्सवः संपत्स्यते इति नितान्त-प्रमुदित-हृदया जिजाम्बा इदानीं स्वकर-कमलावचितैः सहस्र-कमल-पुष्पैः पूजयितुं वाञ्छति जगदीश्वरम् ।

शंभु० — तद् गच्छामः वयं जलदेवतेव कमल-सरसि संचरन्तीं कमलावचयं च कुर्वतीं जिजाम्बां द्रष्टुम् ।

हीर० — अद्य तु बलवदस्वस्थतया सा न शक्नोति नौका-संचारं कर्तुं कमल-सरोवरान्तः ।

शंभु० — सर्वथा दुष्करमेव चिकीर्षति जिजाम्बा । तत् कथम् अस्याः पूजाविधि-प्रीत्यर्थं कमलानि संचीयन्ताम् ?

राजारामः — आर्य ! किमत्र दुष्करम् ? अहं बाणाग्रैः छिनद्मि सरोवरान्तःकमलानि । ततश्च भवान् सूत्रजालके तानि संचिनोतु । एवं कृते अनन्य-कर-स्पृष्टानि कमलानि जिजाम्बा लभेत शिव-पूजनार्थम् ।

हीर० — (सस्मितम्) ज्ञातं नु निमित्तं कोदण्ड-क्रीडायाः ?

शंभु० — ( सानन्दं भ्रातरम् आश्लिष्य ) अहो प्रत्युत्पन्नमतित्वं ते राजाराम !

हीर०— सर्वथा अनुकृतम् रूपमिव अकुण्ठित-प्रज्ञा-शालित्वम् अपि पितृदेवस्य कुमारेण। भवतु विषयान्तर-व्यग्रतया न पृष्टं मया प्रयोजनं युवराजागमनस्य !

शंभु० — शृणु प्रयोजनम् । अथ केशवदैवज्ञप्रमुखैः मौहूर्तिकैः निर्णीतेषु राजाभिषेक-शुभ-मुहूर्तेषु ज्येष्ठ-शुक्ल-त्रयोदशी तिथिः अमात्यपरिषदा स्वीकृता ।

राजारामः — ततश्च श्रीरामजन्म-महोत्सव-दिनाद् आरभ्य सर्वत्र राज्ये उद्घोषितम् ।

हीर० — किम् उद्घोषितम् ? कथं च उद्घोषितम् ?

राजारामः — अहं श्रावयामि । (उच्चैः स्वरम् आलम्ब्य) भोः भोः ! शृण्वन्तु शृण्वन्तु सर्वे नगर-निगम-पत्तन-खेट-खर्वट-वासिनः शास्त्रपण्डिताः रणपण्डिता वाणिज्य-विज्ञाः कृषिकुशलाः लिङ्गिनः वर्णिनः यवनाः आबालवृद्धाः स्त्रीपुरुषाः ।

उभे — ( विहस्य ) कुमार ! अलम् अलम् एतावता । अतिद्राघीयसी सा उद्घोषणा ।

**राजारामः** — ज्येष्ठे सुदि त्रयोदश्यां तिथौ सुमङ्गल-मुहूर्ते तातचरणानां...नहि नहि श्रीशिवाजि-महाराजानां राजाभिषेक-महोत्सवः संपद्येत। तत्...

**उभे** — (विहस्य) कुमार! अलम् अलम् एतावता। अतिद्राघीयसी सा उद्घोषणा!

**राजा॰** — आर्य! राजाभिषेक-महोत्सवात् पूर्वं तातचरणानां यथाविधि मौञ्जीबन्धनं भविष्यति! (उच्चैः हसति) तथा च—

**शंभु॰** — किं तथा?

**राजा॰** — विवाहाश्च भविष्यन्ति, इति जिजाम्बा माम् अकथयत्।

**हीर॰** — (स्वगतम्) सर्वथा अकल्पितम् एव ब्राह्मणाः कल्पयन्ति।

**शंभु॰** — (सस्मितम्) हीरकणिके! सर्वथा अपूर्वं खलु अस्माकं भागधेयम्। नैव पुराणेषु न वा इतिहास-गाथासु केनापि पुत्रेण पितृ-विवाहोत्सवे मङ्गलाक्षताभिवर्षणं कृतम्। तत्तु वयम् इदानीं करिष्यामः। अस्तु। राजाभिषेक-महोत्सव-निमित्तम् अत्र रायगिरौ तथा उपत्यकास्थितेषु ग्रामेषु अङ्ग-वङ्ग-कलिङ्ग-आन्ध्र-केरल-कोङ्कण-सौराष्ट्र-राजस्थान-सिन्ध-पञ्चनद-काश्मीर-मयराष्ट्र-नेपाल-मगध-कोसल-विदर्भादि-नाना-प्रदेश-वासिनः विविध-भाषा-भाषिणः तथा च फिरङ्गिणः पुर्तुगिज्ञाः आङ्ग्लाः, तुरुष्काः, पाठीनाः मुद्गलाः इतरे च गायकाः गायिकाः, नटीनटाः नर्तकाः नर्तिकाः मार्दङ्गिकाः वैणिकाः मल्लाः नियुद्ध-कुशलाः क्रीडानिपुणाः धन्विनः शिल्पिनः वाग्मिनः रात्निकाः पण्डिताः काव्य-कुशलाः कीर्तन-कोविदाः चतुर्वेद-घनपाठिनः वैयाकरणाः नैयायिकाः वेदान्तिनः योगिनः एवंविधाः परःसहस्राः अगणित-गुण-गण-शालिनः अतिथिविशेषाः निमन्त्रिताः अनिमन्त्रिताश्च सम-

नुप्राप्ताः। तेषां सभाजनं युवराजेन मया स्वयं कर्तव्यम् इति महाराजानाम् आदेशतः संचरामि इतस्ततः।

हीर० — अथ क्व इदानीं महाराजाः ?

शंभु० — स्वाभिषेकात् पूर्वं भगवतः महाबलेश्वरस्य अभिषेकं कर्तुं तथा छत्रधारणात् पूर्वं प्रतापदुर्गाधिदेवतायाः जगदम्बिकायाः शिरसि नवरत्नाङ्कितम् सुवर्णच्छत्रम् आरोपयितुम् अद्य प्रातरेव जिजाम्बां प्रणम्य परमानन्देन सोयराम्बया च सह प्रयाताः। गागाभट्ट-महोदयाश्च राजाभिषेकस्य समग्रां सामग्रीं समायोजयन्ति विधि-विधानं च निर्धारयन्ति स्वरचित-राजाभिषेकप्रयोग-ग्रन्थानुसारम्।

राजा० — आर्य ! अतीव उत्सुकः अस्मि कलाकुशलानां कला-विलास-विलोकने।

शंभु० — तद् अनुगच्छतु मां कुमारः जगदीश्वर-मन्दिरस्य पुरस्तात् संस्थापिते रमणीये रङ्ग-मण्डपे कलानिपुणान् सभाजयितुम्।

(सर्वे गच्छन्ति)

(इति विष्कम्भकः)

(ततः प्रविशति परमानन्दनिर्दिश्यमानमार्गः सपत्नीकः शिवराजः)

परमानन्दः — इत इतो देवः। इत इतो महादेवी। महाराज ! इदं तत् पञ्चापगा-समुद्गम-पवित्रं श्रीमन्महाबलेश्वरक्षेत्रं वयम् आगताः।

सह्याचलोच्चतम-शृङ्ग-विराजमानं
गन्धाढ्य-पुष्पमय-वृक्ष-लताभिरामम्।
संस्पर्श-शीतल-तरानिल-सुप्रसन्नं
कैलासनाथ-हृदयंगम-तीर्थमेतत्॥ २॥

**शिवाजिः** — परमानन्द ! सह्याचलस्य सर्वाणि एव तुङ्ग-शृङ्गाणि सर्वथैव हृदय-हारीणि सन्ति । तथापि इदं प्रकृति-सौन्दर्य-रमणीयं तीर्थस्थानम् आवर्जयतितमाम् अस्मन्मानसम् ।

**राज्ञी** — संतत-संग्राम-व्यग्रतया इच्छन्नपि न पारयति आर्यपुत्रः हृदयंगम-तीर्थक्षेत्रेषु श्रम-परिहारार्थं विहर्तुम् । अद्य कथमपि लब्धः अवसरः ।

**शिवाजिः** — अतीव प्रियमिदं श्रीमहाबलेश्वरमन्दिरम् अस्माकम्!

**राज्ञी**— अत एव अफझुल्ल-वधानन्तरं तदीयास्थान-शिखर-विराजमानः सुवर्णकलशः महाबलेश्वर-मन्दिर-शिखरे समारोपितः महाराजेन ।

**शिवाजिः** — देवि ! एवमेव दिल्लीपति-राजसभा-शिखर-स्थितं सुवर्ण-कलशम् उत्पाट्य श्रीकाशीविश्वेश्वर-मन्दिर-शिखरे समारोपितुं त्वरते अस्मन्मानसम् ।

**परमानन्दः** — इतः अवलोकयतु महाराजः ।

विमल-नभसि चञ्चत्-पक्षती-गाहमान-
विविध-विहग-मालोद्बिम्बित-स्वच्छ-नीरम् ।
अविरल-जल-लीला-लोल-गोपाल-बाल-
शुक-चटक-बकोटोद्भ्रान्त-मीनं सरस्तत् ।। ३ ।।

**शिवाजिः** — अहो दर्शनीयता जलाशयस्य ! नूनं नीलमणिरिव सह्याद्रिराज-मस्तके विराजयते अयं ह्रदः ।

**राज्ञी** — मन्ये महाबलेश्वर-दर्शनार्थम् अवतरन्तीनां देवाङ्गनानां मुखावलोकनार्थं सुस्थापितः महादर्पणः खलु अयम् ।

**परमानन्दः** — महाराज! निरीक्ष्यतां तावद् असौ सरोवर-परतीर-प्ररूढः परितः स्थण्डिलावस्थापित-मन्दारमाला-विराजित-सिन्दूर-

पुटारक्त-महारुद्र-विग्रहः महान् वनस्पतिः ।

विलोल-नवपल्लवावृत-सहस्र-नीडाश्रित-
विहंग-कुल-काकली-कलकलायमानो भृशम् ।
निगूढतम-कोटर-स्थित-महोरगोत्फूत्कृति-
ध्वनि-श्रुति-भयार्त-चित्रक-कुलोज्झितः पिप्पलः ॥ ४ ॥

शिवाजिः — (बद्धाञ्जलिर्भूत्वा)

नमो वीर-वरिष्ठाय लीलोल्लङ्घित-सिन्धवे ।
रामकार्यैकनिष्ठाय साधुवृन्दैकबन्धवे ॥ ५ ॥

देवि ! एवंविधाः मारुतिमूर्तयः स्थाने स्थाने संस्थापिताः अस्मद्-गुरुचरणैः श्रीसमर्थरामदासैः वीरभावं लोकेषु समुद्दीपयितुम् ।

परमानन्दः — महाराजादेशानुसारं राजाभिषेकावसरे शुभागमनार्थं श्रीसमर्थ-सद्गुरु-चरणान् निमन्त्रयितुं समनुप्रेषिताः अस्मद्-गुरुकुल-प्रधानाचार्याः सज्जनगडं प्रति ।

राज्ञी — अहो भाग्यम् । राजाभिषेक-महोत्सवावसरे श्रीसमर्थ-चरणानां शुभाशीर्वचनानुग्रहः भवेद् इति नितान्तं प्रमुदितास्मि । (सलज्जम् इव) समर्थ-रामदासानुग्रहेण एव त्वं महाराज्ञी-पदं प्राप्तवती इति स्मरामि तात-वचनम् ।

शिवाजिः — महती खलु कृपा स्वामिचरणानाम् अस्मासु ! नूनं कूर्म-दृष्ट्या पुष्णन्ति, विहंग-दृष्ट्या च संरक्षन्ति लोकोद्धार-निरताः श्रीरामोपासना-परायणाः श्रीसमर्थचरणाः अस्मान् ।

राज्ञी — तत् कथमिव ? आर्यपुत्र एव साधूनां परित्राता । तत् कथं स्वामिनः आर्यपुत्रम् अपि परिपालयन्ति ?

शिवाजिः — देवि ! श्रूयताम् । अथैकदा गिरिदुर्ग-निर्माण-कार्यं विलोकयितुं वयं गताः। तत्रैव श्रमिकाणां शिल्पिनां च कुशलं ज्ञातुं सहसा उपागताना स्वामिना "जय जय रघुवीर समर्थ" इति

गर्जनां श्रुत्वा स्वामिपद-वन्दनार्थं वयं सपरिवारं गताः।

राज्ञी — ततस्ततः ?

शिवाजिः — तत्र च अस्मदादेशेन अविश्रान्तं दुष्करं दुर्ग-निर्माण-कार्यं कुर्वतः परसहस्रान् श्रमिकान् साहंकारं पश्यताम् अस्माकं मुखमुद्राम् विलोक्य कमपि बृहद्द्रुघण-पाणिं श्रमिकं सहसा आहूय, "भिन्धि तं महान्तं ग्रावाणम्" इति सहसा समादिष्टं स्वामि-चरणैः।

राज्ञी — ततस्ततः ?

शिवाजिः — ततश्च स्वसामर्थ्यं प्रदर्शयितुम् इव स बलिष्ठः एकेनैव द्रुघणाघातेन द्विधा कृतवान् तं गजक-प्रमाणं दृढ-ग्रावाणम्।

राज्ञी —(विस्फारित-नयना ओष्ठावस्थापित-पाणिपल्लवा) अहो आश्चर्यम् ! अहो सामर्थ्यं श्रमिकस्य !

शिवाजिः — नैतदाश्चर्यम्। महदाश्चर्यं तु अन्यदेव।

राज्ञी — (सकुतूलहम्) कीदृशं तद् महदाश्चर्यम् ?

शिवाजिः— सहसैव द्विधा खण्डितस्य तस्य अन्तर्वर्तिनः जलपूर्णात् अवटात् कोऽपि मण्डूकः बहिरुत्प्लुतवान्।

राज्ञी — अम्मो ! अहो बत अश्रुतपूर्वम् इदम् आश्चर्यम् ! एवं चमत्कुर्वन्ति योगिनः। ततस्ततः ?

शिवाजिः — ततः तन्निर्दिश्य साकूतम् अस्मान् विलोकयन्तः स्वामिनः प्राहुः।

राज्ञी — किं प्राहुः ?

शिवाजिः — महाराज ! महाराजाधिराज ! न केवलम् एतेषां श्रमिकाणाम् एव अपि तु पाषाणान्तःस्थितस्य मण्डूकस्य अपि पालनं पोषणं च भवान् एव करोति। अस्य पामरस्य जलचरस्य जीविकार्थं पर्याप्तं जलम् अपि पाषाण-गर्भे भवता एव स्थापितम् इति !

तदानीम् एव लज्जावनतं स्वमस्तकम् अस्माभिः स्वामि-चरणयोः निहितम्। ततः प्रभृति सर्वथा विलयं गतः स्वकर्तृत्वाहंकार अस्माकम्। एवम् अहंकाराख्यं योगिनाम् अपि सुदुर्जयम् अन्तःशत्रुं निहत्य संरक्षिताः खलु वयं श्रीसमर्थचरणैः।

परमानन्दः — इतश्च पश्यतु महाराजः! एते हि—

भक्तिगीतानि गायन्तो नृत्यन्तो भावविह्वलाः।
भजन्तः पण्ढरीनाथं स्वच्छन्दं यान्ति भावुकाः॥ ६॥

शिवाजिः— (आकर्णयन्) भागवतोत्तमस्य वैष्णव-वीरस्य श्रीतुकारामस्य अमृतमयानि एतानि भक्तिगीतानि नूनं समुल्लासयन्ति हृदयम् अस्माकम्। देवि! अथैकदा समराङ्गणात् प्रत्यागच्छद्भिः अस्माभिः मार्गस्थिते श्रीविठ्ठल-मन्दिरे साधुवर्याणां कीर्तन-ध्वनिः आकर्णितः। तत्प्रभावेण प्रफुल्लारविन्द-गन्धेन मधुव्रतः इव विवशीभूतः अयम् अन्तरात्मा मन्दिरं प्रति ध्रुवम् अस्मान् आकृष्य नीतवान्।

परमानन्दः — महाराज!

रणतूर्य-निनादेन दीप्यमानानि भूयसा।
वीरोत्तमानां चेतांसि द्रवन्ति हरिकीर्तनैः॥ ७॥

राज्ञी — ततस्ततः?

शिवाजिः — तत्र श्रीतुकाराम-मुखात् प्रवहन्तीं भक्ति-सुधा-मन्दाकिनीं कर्णपुटेन निपीतवताम् अस्माकं भावावेश-विह्वलम् अन्तःकरणं समाधिमग्नम् इव आसीत्।

राज्ञी — ततस्ततः?

शिवाजिः — तदैव अस्मन्मार्गणार्थं प्रधावतां म्लेच्छ-सैनिकानां कोलाहलेन समाधि-व्युत्थिता वयं यावत् दुष्ट-प्रतीकारार्थं समुत्थिताः तावदेव सः महासाधुः प्राह—"राजन्! अलं प्रयासेन, अलं

प्रयासेन ! भगवदेकशरणाः वयं वैष्णवाः। तमेव इदानीं संकट-काले शरणं करवाम। उपविशतु महाराजः अत्रैव। सर्वथा साधु-परित्राण-चणं भगवतश्चक्रम् एव परचक्रम् एतन्निवारयेत् इति श्रद्दधामि।"

परमानन्दः —

श्रद्धावन्तो न धावन्ति विपत्स्वापतितास्वपि।
श्रद्धा-प्रबोधितो भक्तांस्त्रायते हृत्स्थ ईश्वरः॥ ८॥

राज्ञी — ततस्ततः ?

शिवाजिः — ततश्च साधुप्रवरस्य तम् आदेशम् उल्लङ्घयितुम् असमर्थाः वयम् आप्रभातं तत्रैव कीर्तन-सुधासागरे सुखं विगाहमाना आस्म।

राज्ञी — तत् किं म्लेच्छानीकं न तत्रागतम् ?

शिवाजिः — मन्दिरसमीपम् आगतम् आसीत्।

राज्ञी — (सभयम्) अहो संकटम् !

शिवाजिः — तदानीं मन्दिर-समीपतः त्वरमाणम् अस्मत्सदृश-वेशधारिणं कमपि तुरङ्ग-सादिनम् अनुढौकमानं क्वापि प्रलीनम् इव तन्म्लेच्छानीकम्।

राज्ञी — (साञ्जलिबन्धम्) मन्ये भगवान् पाण्डुरङ्गः एव महा-राज-स्वरूपधारी भूत्वा —

शिवाजिः — एवं लोकः श्रद्दधाति। अस्तु ! वैष्णव-वीराणाम् इदं वृन्दं विलोक्य श्रीतुकाराम-स्मरणेन सुप्रसन्नं हृदयम् अस्माकम्। देवि ! श्रीतुकाराम-सदृशः वीतरागः न भूतो न भविष्यति।

राज्ञी — कथयतु महाराज वृत्तान्तम्। अखण्डित-राज्यव्यवहार-व्यग्राणां महाराजानां श्रीमुखतः वृत्तान्त-श्रवणार्थं न कदापि लभ्यते अवसरः।

शिवाजिः — देवि ! तस्यां रात्रौ तद्भक्तिरसायनं निपीय नितान्त-प्रसन्न-हृदयैः अस्माभिः प्रभूत-रजत-सुवर्ण-हीरक-मौक्तिक-महावस्त्रादिमयं महादानम् अमात्येन सह श्रीतुकारामाय प्रेषितम् ।

राज्ञी — महाभाग्येन एव एवंविधं दानपात्रं लभ्यते ।

परमानन्दः —

विद्यायाश्च कलायाश्च मन्त्रस्य च धनस्य च ।
पात्रभूतं ग्रहीतारं दाता भाग्येन विन्दते ।। ९ ।।

शिवाजिः—सर्वथा अकिञ्चनः अपि सः महासाधुः समग्रम् अपि तद्-दानम् अनवेक्ष्य एव आह — " महाविष-निर्विशेषं खलु इदं धनम् अस्मादृशां भक्तिधनानाम् ! भगवदाराधने महान् अन्तरायः खलु धनं नाम ।

राज्ञी — तत् किं न स्वीकृतं महादानम् ?

शिवाजिः — न स्वीकृतं धनम् । न स्वीकृता अस्माकम् अभ्यर्थना ।

राज्ञी — का नाम अभ्यर्थना महाराजस्य ?

शिवाजिः — अङ्गीक्रियताम् अयं जनः शिष्यभावेन । सर्वसङ्ग-परित्यागं कृत्वा स्वामिचरणानाम् अन्तेवासी बुभूषामि इति ।

राज्ञी — तदा किम् उक्तं श्रीस्वामिचरणैः ?

शिवाजिः — " नास्ति खलु दुष्ट-निर्दलनसदृशं भगवदाराधनं साम्प्रतिके कलिकाले । तच्च भवान् भगवत्कृपया करोत्येव । अस्मिन् धर्म-राज्य-संस्थापन-कार्ये समर्थ-श्रीरामदासस्वामिनां हितबोधः सर्वथा अनुसर्तव्यः इति । परमानन्दः (ऊर्ध्वं विलोक्य) महाराज ! समय इदानीं श्रीमन्महाबलेश्वर-मन्दिरं प्रवेष्टुम् । तद् एतु एतु महाराजः । अत्र क्षणं विश्रम्य मन्दिरं प्रवेष्टुम् अर्हति महाराजः ।

विलम्बि-शाखा-शतसंपरीतो
ह्येकोऽप्यनेक-द्रुम-सङ्घ-कल्पः ।
प्रश्रान्त-पान्थाश्रय-सौख्य-दायी
वटद्रुमोऽयं ह्रयतीव भव्यः ॥१०॥

(महाराजः वृक्षतले पाषाणखण्डे राज्ञीद्वितीयः उपविशति । तत्र सहसा समेत्य कृषीवल-कुलाङ्गनाः नीराजना-विधिना अभिनन्दन्ति ।)

परमानन्दः — इतश्च विलोकयतु महाराजः ।

कण्ठावलम्बित-विलोल-सुवृत्त-घण्टा-
मालोत्थ-मञ्जुल-निनाद-विमग्न-चित्तैः ।
गोयुग्मकैरविरतं प्रतिवाह्यमाना
दूराद् विराजतितमां शकटावलीयम् ॥११॥

(नेपथ्ये — घण्टानादेन सह "कर्पूरगौरं करुणावतारम्" इति स्तोत्रगायनम् । सर्वे तालिकाध्वनिं कुर्वन्ति ) गानमिति साधु

परमानन्दः — (समाधिमग्नं शिवाजिं विलोकयन्) देवि ! अहो शिवभक्तिसान्द्रम् अन्तःकरणं महाराजस्य । शिवस्तवन-श्रवण-मात्रेणैव परमयोगीव सविकल्प-समाधि-मग्नः खलु महाराजः ।

राज्ञी — हर हर हर महादेव ! (इति त्रिवारं मन्दं गर्जति)

शिवाजिः — (शनैः नेत्रे उन्मीलयन्) परमानन्द ! विद्वद्मूर्धन्यानां श्रीमद्गागाभट्टानां दृढानुरोधम् अङ्गीकृत्य जिजाम्बया निश्चितः राजाभिषेकमहोत्सवः ।

राज्ञी — ज्येष्ठे सुदि त्रयोदश्यां तिथौ शनिवासरे अरुणोदय-वेलायाम् ।

शिवाजिः — अत एव निज-राजाभिषेकात् पूर्वं राजराजेश्वरस्य पुण्याभिषेकं गङ्गादि-सप्त-सरिद्वराणां तीर्थजलैः निर्वर्तयितुं वयम् अ[illegible]गताः देव्या सह ।

परमानन्दः — सर्वदा सर्वं समुचितमेव करोति महाराजः।

(सर्वे गर्भागारं प्रविशन्ति)

परमानन्दः — अरे श्रीधर ! सौवर्णम् अभिषेकपात्रं तावद् उपनीयताम्। अरे देवदत्त ! त्वं तावत् सप्त-सिन्धु-तीर्थ-जल-पूर्णान् कलशान् उपानय।

(उभौ ससंभ्रमं तथा कुरुतः। शिवाजिः प्रणम्य अभिषेकपात्रं शिवलिङ्गोपरि दधाति। राज्ञी बिल्वदलानि समर्पयति)

शिवाजिः — परमानन्द ! आशु-काव्य-कला-कुशलः ननु भवान्। तद् गीयतां किमपि श्रीमन्महाबलेश्वरस्य उज्ज्वल-रस-मयम् अभिनवं स्तोत्रम् इदानीं भगवदभिषेकावसरे।

देवदत्तः — गङ्गाजलं समर्पयामि।

(—इति कलशस्थ-जलेन शिवराजोद्धृतम् अभिषेकपात्रं पूरयति)

परमानन्दः —

(मुहूर्तं ध्यानं नाटयन् ॐ नमः शिवाय इति त्रिःउद्घोष्य गायति)

अलक्ष्यलक्ष्यलक्षलक्षऋक्षतारकाग्रह-
प्रतिस्फुरद्विचित्ररोचिरुच्चकैर्विरूषितम्।
सुनीलमेघमण्डलोल्लसत्-तडित्-सहस्ररुङ्
नभो-वितान-मूर्धजं भजामहे महेश्वरम्॥
भजे महाबलेश्वरम् ॥१२॥

श्रीधरः — यमुना-जलं समर्पयामि।

(इति द्वितीयं कलशम्)

परमानन्दः —(पुनर्ध्यानं नाटयन् ॐकारम् उद्घोष्य —)

त्रिविष्टपोच्छलत्-स्खलत्-सुपर्व-वर्ग-निर्झरी-
दृढ-प्रपात-कुण्ठनोज्जटा-कटाह-मण्डनम्।

महाविष-प्रकाशमान-नीलकण्ठ-रोचिषं
त्रिपुण्ड्र-भस्म-भूषितं भजामहे महेश्वरम् ॥
भजे महाबलेश्वरम् ॥१३॥

देवदत्तः — गोदावरीजलं समर्पयामि। (इति यथोक्तं करोति।)

परमानन्दः — (पुनरपि यथोक्तं कृत्वा —)

प्रदग्ध-मुग्ध-मन्मथेद्ध-हव्यवाहनोच्छलत्-
स्फुलिङ्ग-वर्ष-धर्षित-त्रिलोक-लोक-लोचनम् ।
स्फुटाट्टहास-गर्जित-प्रकम्पिताष्टदिक्-तटं
सुरासुरोरगानतं भजामहे महेश्वरम् ॥
भजे महाबलेश्वरम् ॥१४॥

श्रीधरः — सरस्वतीजलं समर्पयामि।
(— इत्युक्त्वा यथोक्तं करोति।)

परमानन्दः — (पुनरपि यथोक्तं कृत्वा—)

नितान्त-कान्त-कान्तिभृन्मृगाङ्क-खण्ड-शेखरं
मुहुर्मुहुर्धमन्-महाभुजङ्ग-भोग-कङ्कणम् ।
तिरस्कृतार्ककोटिरोचिरुग्र-भाललोचनम्
अखण्ड-चण्ड-ताण्डवं भजामहे महेश्वरम् ॥
भजे महाबलेश्वरम् ॥१५॥

देवदत्तः — नर्मदाजलं समर्पयामि। (इत्युक्त्वा यथोक्तं करोति।)

परमानन्दः — (पुनरपि यथोक्तं कृत्वा—)

दणद्-दणत्-पदाहति-प्रकम्प्र-सर्वभूधरो-
द्धूतद्रुमाहति-त्रसद्-विहङ्गम-प्लवङ्गमम् ।
भयार्त-चण्डिकावलम्बि-वक्रतुण्ड-षण्मुखं
यदीयमुग्रताण्डवं भजे तमन्तकान्तकम् ॥
भजे महाबलेश्वरम् ॥१६॥

श्रीधरः — सिन्धु-जलं समर्पयामि। (यथोक्तं करोति।)

परमानन्दः — (पुनरपि यथोक्तं कृत्वा—)

प्रजापति-प्रसिद्ध-यज्ञ-कुण्ड-हव्यवाहनोद्-
धगद्धगज्ज्वलत्-स्खलत्-सती-शरीर-हारिणम्।
स्फुरत्-परश्वध-त्रिशूल विद्ध-दक्ष-वक्षसं
कराल-काल-भीतिदं भजामहे महेश्वरम्॥
भजे महाबलेश्वरम्॥१७॥

देवदत्तः — कावेरी-जलं समर्पयामि। (यथोक्तं करोति।)

परमानन्दः — (पुनरपि यथोक्तं कृत्वा —)

गुणायमान-सर्पराज-राजमान-भूधरा-
धिराज-चण्ड-चाप-दण्ड-मुक्त-विष्णु-सायकम्।
समुद्र-मुद्रिता-सुरेश्वर-स्फुरत्-पुर-त्रयी-
क्षणार्ध-दाह-धन्विनं भजामहे महेश्वरम्॥
भजे महाबलेश्वरम्॥१८॥

श्रीधरः — पञ्चगङ्गा-जलं समर्पयामि (यथोक्तं करोति।)

परमानन्दः — (यथोक्तं कृत्वा—)

कृतान्त-दण्ड-चण्ड-बाहु-दण्ड-शक्ति-दुर्मद-
प्रमत्त-रावणोद्धृताद्रि-तुङ्ग-शृङ्ग-संस्थितम्।
अकाण्ड-कम्प-संभ्रमद्-धरा-धरेन्द्र-नन्दिनी-
दृढावलम्ब-मोदमान-मानसं भजे शिवम्॥१९॥

भजे शिवं महेश्वरम्।
भजे शिवं महेश्वरम्।

(इति साकूतं शिवराजं विलोकयति।)

शिवाजिः — (अभिषेकान्ते) अहो कवीन्द्र !

परमानन्दः — (सचकितम्) कोऽत्र कवीन्द्रः ? कोऽत्र कवीन्द्रः ?

शिवराजः — (सहर्षम्) भवान् परमानन्दः कवीन्द्रः ! इदं स्वीयं नवरत्नं कण्ठाभरणम् उपहारीक्रियते अस्य अभिनव-स्तोत्रस्य प्रीत्यर्थम् ।

कवीद्रः — (सविनयं शिरसि धृत्वा) अनुगृहीतोऽस्मि ! सर्वथा सफलं मे कवित्वं यन्महाराजानुग्रहपात्रभूतोऽस्मि 'कवीन्द्र' इति सुदुर्लभम् उपाधिं च प्राप्तवान् अस्मि श्रीमन्महाबलेश्वर-मन्दिरे ।

शिवराजः —(छात्राभ्यां दक्षिणां समर्पयन्)कवीन्द्र ! अत्र मनाग् ध्यानं कृत्वा सत्वरम् एव जिगमिषामः प्रतापदुर्गाधिदेवता-मन्दिरम् । आत्मनः सुवर्णच्छत्र-धारणात् पूर्वं जगदम्बिकायाः महाच्छत्रं समर्पयितुं समुत्सुकाः वयम् ।

कवीन्द्रः — सर्वथा समुचितम् एव औत्सुक्यम् इदं महाराजस्य ।

(पटाक्षेपः)

(इति पञ्चमे अङ्के द्वितीयं दृश्यम्)

## (तृतीयं दृश्यम्)

(ततः प्रविशति भवानीप्रतिमायाः पुरस्तात् कवीन्द्रादि-परिवारेण सहितः शिवराजः । )

शिवराजः — कवीन्द्र ! अत्रैव पुरस्ताद अधित्यकायां पट-मण्डपे निर्दलितः स देव-द्रोही अफझुल्लः जगदम्बिकया अस्मत्-करेण । अत्रैव परिसरारण्ये विध्वस्ता समग्रा शत्रु-सेना नेताजि-प्रमुखैः अस्मदीयैः वीरवर्यैः ।

कवीन्द्रः — तदानीं जगदम्बिकायाः प्रीत्यर्थं निखातं देवद्रोहिणः

विच्छेदितं कलेवरं मस्तकं च दुर्ग-महाद्वारस्य पुरस्तात् ।

(ततः प्रविशतः छात्रौ सुवर्णच्छत्रम् आदाय ।)

शिवराजः — इदानीम् आत्मनः प्रीत्यर्थं राजच्छत्रधारणात् पूर्वम् इदं सुवर्णच्छत्रं समर्पयामः ।

(इति छत्रं भवानी-विग्रहोपरिष्टाद् दधाति ।)

कवीन्द्रः—

विपद्वज्राऽऽसारादतिविततताप‌त्रयतपात्
कृपाच्छत्रं यस्या जनमवति संत्रस्तमखिलम् ।
इदं स्वर्णच्छत्रं शिरसि खलु तस्या धृतवतो
निरातङ्का भूयात् तव शिव सदा छत्रपतिता ॥२०॥

(नेपथ्ये मङ्गलतूर्यध्वनिः ।) (पटाक्षेपः ।)

* * *

इति शिवराजाभिषेक-नाटके 'भगवदर्चनं' नाम पञ्चमोऽङ्कः ।



# षष्ठोऽङ्कः ।

( ततः प्रविशति औषधपात्र-हस्ता हीरकणिका ससंभ्रमम् इतस्ततः विलोकयन्ती । )

हीरकणिका — क्व नु खलु निर्गता रत्नमाला ? (भूयो भूयः इतस्ततः विलोक्य) अये ! नाद्यापि दृष्टिपथम् एति । (सहसा दूराद् अवलोक्य) इयं सा रत्नमालिका इव दृश्यते । राजाभिषेक-महोत्सवार्थं देशान्तरागतानां नट-नर्तिकीनां पथि पथि नृत्यं विलोकयन्ती पिच्छिले पथि गौः इव मन्थरं चलन्ती दृश्यते । (उच्चैः स्वरम् अवलम्ब्य) रत्नमाले ऽऽ ! अयि रत्नमाले ऽऽऽ ! (आकाशे) किं ब्रवीषि ? राजाभिषेकार्थम् आगतानां केरलीनां नृत्यं पश्यामि इति ? अयि मूढे ! कियन्तं कालं त्वाम् इतस्ततः अन्विष्यामि ? (आकाशे) किं ब्रवीषि ? तत्र पार्श्वतः कामरूपाद् आगतानाम् अपूर्वं नृत्यं मनाग् विलोक्य आगच्छामि इति ? अयि मूढे ! राजाभिषेक-निमित्तम् अत्र रायरीदुर्गे गङ्गा-यमुना, सिन्धु-सरयू, ब्रह्मपुत्रः, नर्मदा, चर्मण्वती-वेत्रवती, क्षिप्रा, पूर्णा, महानदी, गोदावरी, कृष्णा-कावेरी-ताम्रपर्णी-इत्यादि-सकल-सरित्-तीरवासिनः महेन्द्राचल-अरुणाचल-सिंहाचल-नीलाचलब्रह्माचल - मलयाचल - हिमाचल - विन्ध्याचल-रैवतक-पारियात्र-प्रभृति-सर्वगिरि-शिखर-प्रत्यन्तचारिणः नट-नर्तक-गायक-वादक-यान्त्रिक-मान्त्रिकादयः नानाविधाः सहस्रशः विचित्र-वेश-धारिणः विविध-भाषा-भाषिणः नारी-नराः समामिलिताः । तत् किं तेषां सर्वेषां कलाकौशल्यं भ्रमरीव आस्वादयन्ती यथेच्छम् आगमिष्यसि.? एहि ! शीघ्रम् उपेहि ! त्वरितम् आयाहि ! !

**रत्नमाला** — (ससंभ्रमम् आगत्य) हीरकणिके ! अतिमात्रं प्रकुपितासि ।

**हीरकणिका** — कथं न कुप्यामि ? अद्य मासः व्यतीतः जिजाम्बायाः अस्वास्थ्यस्य! इदं च किमपि दुर्घटं भस्म कमल-मधु-मिश्रितं सूर्योदय-काले एव दातव्यम् इति समादिष्टास्मि राज-वैद्येन । अतः नक्तम् एव कमलमधु कुतश्चित् समानेतुं मया प्रेषिताऽसि ।

**रत्नमाला** — हीरकणिके ! किं करोमि ? कमलमधु संगृहीतुं यस्य यस्य गृहमहं मधुकरीव गता स स सर्वोऽपि जनः सपरिवारं नृत्यगीत-नाट्यानन्दम् अनुभवितुं बहिरेव निर्गतः । अतः देव्याः सोयराम्बायाः सदनं गत्वा आनीतम् इदम् कमलमधु ।

**हीरकणिका** — तथापि महान् अयं काल-विलम्बः औषध-दाने । बलवदस्वथा जिजाम्बा अद्य ।

**रत्नमाला** — ( अन्यतः अवलोक्य) हीरकणिके ! पश्य । पश्य । एते उपाध्याय-महाभागाः रामायणम् आदाय सत्वरं गच्छन्ति जिजाम्बायाः सदनम् । तदेहि । शीघ्रमेव गच्छावः तत्रैव औषध-दानाय ।

( रुग्णशय्यायां "श्रीराम जयराम जय जय राम । –" इति मन्त्रं जपन्ती जपमालिकाहस्ता निमीलितनयना एकाकिनी जिजाम्बा । )

**जिजाम्बा** — हीरकणिके ! अयि रत्नमाले !

**उभे** — अम्ब ! इमे स्वः ।

**जिजाम्बा** — हीरकणिके! अद्य कमल-मधु-मिश्रितं किमपि विशिष्टम् औषधम् आदिष्टं राजवैद्येन । अपि सिद्धं तत् ?

**उभे** — अथ किम् ।

**हीरकणिका** — एतत् तन्मधु-मिश्रितं रसायनम् ।

**जिजाम्बा** — आनय तत्। (इति औषधं गृह्णाति)

**रत्नमाला** — अम्ब! एते उपाध्याय-महाभागाः समागताः।

**जिजाम्बा** — (औषध-पात्रं सहसा पार्श्वे निधाय) नमो नमः राजोपाध्यायेभ्यः।

**उपाध्यायः** — जयतु जयतु महादेवी। (इति प्रणम्य आसने उपविशति।)

**जिजाम्बा** — हीरकणिके! रामायण-पारायणार्थं राजोपाध्यायाः समागताः। तत् नीराजनं प्रज्वालय, धूपं च दर्शय श्रीरामप्रभोः प्रतिमायाः अग्रतः।

**हीरकणिका** — यथा आदिशति अम्बा। (इति दीप-धूपं दर्शयति)

**जिजाम्बा** — रत्नमाले! मधुपर्कम् आनय राजोपाध्यायस्य कृते।

**रत्नमाला** — यथा आदिशति अम्बा। (इति मधुपर्कं ददाति।)

**उपाध्यायः** — (मधुपर्कं प्राश्नाति।)

**जिजाम्बा** — राजोपाध्याय! तस्मिन् दिवसे रामराज्यस्य हृदयंगमं वर्णनं श्रुतम् आसीत् वर्जयित्वा राजाभिषेकवर्णनम्। ततश्च प्रतिदिनं श्रीमद्गागाभट्टानां श्रीमुखात् नानाविधा धर्मशास्त्र-चर्चा श्रुता। अस्माकं सूर्यवंशीयं भोसल-कुलम् क्षत्रियवर्णम् अस्ति न वेति विवादः धर्मपण्डितैः कैश्चित् उत्थापितः। तद्विषयकः शास्त्रार्थः मया एतावन्ति दिनानि श्रुतः। मन्ये अन्तराय-बहुलानि पुण्यकर्माणि! अत एव रामराजाभिषेकवर्णनं श्रोतुम् इयन्तं कालं नावसरः लब्धः।

**उपाध्यायः** — तत् किम् अद्य रामराजाभिषेक-वर्णनं पठेयम्?

**जिजाम्बा** — उपाध्याय! अद्य ज्येष्ठ-मासस्य शुक्ला एकादशी तिथिः। त्रयोदश्यां प्रातरेव सुवर्णसिंहासनारोहणोत्सवः शिवस्य संपद्येत। अहम् अत्र बलवदबलकलेवरा इच्छन्ती अपि न शक्नोमि

समक्षं वीक्षितुं समग्रं विधिजातम् राजाभिषेकस्य । तद् अद्य कथयन्तु भवन्तः ज्येष्ठ-शुद्ध-चतुर्थीम् आरभ्य एतावन्ति दिनानि गागाभट्टप्रमुखैः संपादितं धार्मिकं विधिजातं राजाभिषेकाङ्ग-भूतम् ।

उपाध्यायः — तद् रामराजाभिषेकवर्णनं रामायणीयम् ?

जिजाम्बा — श्रोष्यामि शिवराजाभिषेकम् अवलोक्य शिवराजेन सार्धम् । हीरकणिके ! आनय तद् गागाभट्टचरणैः विलिखितं राजाभिषेक-प्रयोगस्य पुस्तकम् । उपाध्याय ! एतत् पुस्तकं विलोक्य निरूपयतु भवान् यथाक्रमं राजाभिषेकाङ्गभूतान् विविधान् विधीन् ।

उपाध्यायः — यथा इच्छति महादेवी । शृणोतु देवी !

जिजाम्बा — कथयन्तु महाभागाः । अवहिताऽस्मि ।

उपाध्यायः — (पुस्तकं निरीक्ष्य) अम्ब ! ज्येष्ठे सुदि चतुर्थ्यां तिथौ शुक्रवासरे मौञ्जीबन्धन-विधिः महाराजस्य संपन्नः ।

हीरकणिका — (सस्मितम्) किमिदं मौञ्जीबन्धनं महाराजस्य? विवाहात् पूर्वं मौञ्जीबन्धनं भवति खलु ब्राह्मण-बटुकस्य ।

रत्नमाला — सपुत्र-कलत्रः इदानीं महाराजः । तत् कथं मौञ्जी-बन्धनम् ?

जिजाम्बा — श्रीमद्गागाभट्टैः यद् यद् आदिष्टं तत् शास्त्रशुद्धम् एव सर्वम् । कलियुग-ब्रह्मदेवः खलु स ब्राह्मणः । अस्तु । ततस्ततः ?

उपाध्यायः — ततः मौञ्जीबन्धनानन्तरम् अपराह्णे सुवर्ण-रजत-सप्तधान्यादिभिः महाराजस्य तुला-दान-विधिः समपद्यत ।

रत्नमाला — अथ तत् तोलितं सुवर्ण-रजतादिकं —

उपाध्यायः — ऋत्विक्सात् कृतम् । ततश्च तुला-पुरुष-दानार्थं महाविष्णोः सुवर्ण-प्रतिमां यथाविधि प्रतिष्ठाप्य संपूज्य —

हीरकणिका — किं मन्दिरे संस्थापितवान् ?

उपाध्यायः — नहि नहि। साऽपि होमान्ते ब्राह्मणसात् कृतवान् महाराजः।

जिजाम्बा — मन्ये एवं समाप्तं प्रथमाह्निकं कर्मजातम्। अथ द्वितीय-दिवसे कथम् ?

उपाध्यायः — द्वितीय-दिने ज्येष्ठ-शुक्ल-षष्ठ्यां तिथौ समन्त्रक-विवाह-विधयः निर्वर्तिताः महाराजस्य।

( हीरकणिका रत्नमाला च अन्योन्यं विलोक्य हसतः।)

जिजाम्बा — हीरकणिके ! अलं हसितेन। किम् अत्र हास्य-कारणम् ?

रत्नमाला — अम्ब। कथं न हसामि। तत् किम् अनूढः आसीत् महाराजस्य राज्ञी-परिवारः ?

जिजाम्बा — अभिषेकार्थं समन्त्रकः विवाहः आवश्यकः।

हीरकणिका — तत् किम् अतः पूर्वम् अमन्त्रकाः आसन् महा-राजस्य विवाहाः ?

जिजाम्बा — अस्तु। उपाध्याय ! अतःपरं कथ्यताम्।

उपाध्यायः — अथ विवाह-विधिम् आरभ्य राजाभिषेकाङ्ग-भूतानां धर्मविधीनाम् आरम्भः संजातः। ते च आदौ श्रीगणेश-पूजनं, ततः कलश-स्थापनं, ततः पुण्याहवाचनं, ततः यजमानाभि-षिञ्चनं, ततः षोडश-मातृका-पूजनं, ततः नान्दीश्राद्धं, ततः मधुपर्क-ग्रहणं, ततः रक्त-सूत्र-कङ्कण-ग्रहणं, ततः पट्टबन्धनम्, ततः विना-यकाम्बिकयोः उत्तरपूजनं कृत्वा आचार्यं प्रणम्य चर्चित-विभूतिः महाराजः अग्नि-विसर्जनम् अकरोत्।

हीरकणिका — अहो दुष्करं कष्ट-बहुलं च कर्मकाण्डं वैदिक-धर्मा-चार्याणाम् !

जिजाम्बा — दुष्करम् अपि कर्म-काण्डं परमश्रद्धालुतया सर्वं साधु करोति शिवराजः। अपि नाम समाप्तं द्वितीय-दिवसस्य कर्म-काण्डम् एतावता ?

उपाध्यायः — समाप्तम्। ततश्च तृतीय-दिवसे सप्तम्यां तिथौ ऐन्द्रीं शान्तिं यथाविधि समाप्य पूर्व-रात्रे कृतफलाहारः महाराजः ब्रह्मचारीव भूमि-शयनं कृतवान्।

जिजाम्बा — न खलु अपूर्वं भूमि-शयनं नाम सतत-रणक्रीडा-निरतस्य शिवस्य।

उपाध्यायः — सत्यम् आह महादेवी !

उपधानं शिला, शय्या भूमिः, प्रावरणं नभः।
शेरते निर्भया वीरा नक्तमित्थं रणाजिरे ॥ १ ॥

जिजाम्बा — अस्तु। ततस्ततः ?

उपाध्यायः — अथ अष्टम्यां सोमवासरे ग्रहयज्ञः नक्षत्र-होमश्च समापितः। ततश्च —

"नाभिषेच्यो नृपश्चैत्रे नाधिमासे च भार्गव।
न प्रसुप्ते तथा विष्णौ विशेषात् प्रावृषि द्विज ॥
न च भौमदिने राम चतुर्थ्यां च तथैव च।
नवम्यां नाभिषेकश्चतुर्दश्यां च भार्गव ॥"

इति विष्णुधर्मोत्तर-पुराण-वचनं प्रमाणीकृत्य चतुर्थदिवसे नवम्यां भौमवासरे निषिद्धः आसीत् राजाभिषेक-विधिः।

हीरकणिका — उपाध्याय ! तस्मिन् दिने शंभु-राजारामाभ्यां सोयराम्बया च सह महाराजः अत्रैव कंचित् समयं सुखेन नीतवान्।

रत्नमाला — दिष्ट्या तावान् विरामावसरः प्राप्तः मातृ-परि-

चयार्थं महाराजेन। अन्यथा कुतः विराम-कालः अविरत-राजधर्म-निरतस्य महाराजस्य ?

**जिजाम्बा** — भवतु। ततस्ततः ?

**उपाध्यायः** — ततश्च पञ्चमे अहनि ज्येष्ठे सुदि दशम्यां तिथौ बुधवासरे ऐन्द्री-शान्त्यङ्गत्वेन नवारम्भः नक्षत्र-यागः संपूर्णतां नीतः। तन्निमित्तं नक्षत्र-प्रीतये घृतादि-दक्षिणां दत्त्वा ब्राह्मण-भोजनं संकल्प्य उत्तरपूजां विसर्जनं च कृत्वा आचार्याय [illegible]मा निवेदिताः।

**जिजाम्बा** — कस्य केषां कस्याः कासां वा प्रतिमा निवेदिताः ?

**उपाध्यायः** — तत् तु राजाभिषेक-प्रयोग-कर्ता श्रीमान् गागाभट्टः, प्रदाता महाराजः, प्रतिग्रहीता आचार्यः वा जानाति। अहं न जानामि।

**जिजाम्बा** — अस्तु। ततस्ततः ?

**उपाध्यायः** — अद्य षष्ठः दिवसः राजाभिषेकस्य। अद्य रात्रौ नैर्ऋतियागः आरभ्येत। सांप्रतं राजाभिषेकार्थं देशान्तरेभ्यः समागतानां राजप्रतिनिधीनां सभाजने व्यग्रः महाराजः सायाह्ने लब्धावसरः अम्बायाः पद-वन्दनार्थं सपुत्र-कलत्रः समागच्छेद् इति मे कथितं महामात्येन मोरोपन्तेन।

**जिजाम्बा** — हीरकणिके! चिरस्य न मां प्रति आगतः प्रियदर्शनः वत्सः राजारामः ?

**हीरकणिका** — अम्ब! धर्म-कर्मावसरे पितुः उत्सङ्गे स्थित्वा सर्वं निरीक्षते स कृत्यजातम्।

**जिजाम्बा** — अहो कौतूहली बालभावः! हीरकणिके! निर्ऋतियागावसरे दूरे स्थापय कुमारम्। रक्षःपिशाचादीनां शान्त्यर्थं भवति स यागः इति जानामि।

**हीरकणिका** — यथा आदिशति अम्बा ।

**जिजाम्बा** — भवतु । सप्तमेऽहनि किम् आयोजितं श्रीगागाभट्ट-चरणैः ?

**उपाध्यायः** — (पुस्तकं विलोक्य) अम्ब! स एव राजाभिषेकस्य प्रमुखः दिवसः । तदा आचार्यः कुम्भेन जलम् आनीय सत्पञ्चरत्नेन तेन संभार-प्रोक्षणं करिष्यति । ततश्च अग्नेः उत्तरतः कुम्भं संस्थाप्य श्वेतवस्त्रे कुङ्कुमेन अष्टदलं लिखित्वा तत्र कर्षं-सुवर्ण-निर्मिताम् इन्द्र-प्रतिमां षोडशोपचारैः प्रपूजयेत् । पूजान्ते मधुपर्कं कुण्डल-मुद्रिका-चामर-च्छत्रोपानद्वितान-ध्वज-पताकाः निवेद्य दक्षिणां पुष्पाञ्जलिं च समर्पयेत् ।

**जिजाम्बा** — ततस्ततः ?

**उपाध्यायः** — ततश्च कांस्यपात्रे उदकम् आनीय मन्त्रैश्च औषधीः आपात्य, वेदमन्त्रैः अभिमन्त्रितेन तेन उदकेन त्रिवारम् अग्निं संप्रोक्ष्य तत्राग्नौ अश्व-वस्तु-लोमानि व्रीहिं-मुद्ग-उशीर-गुग्गुल-पिप्पली-अलाबु-बीजानि विष-सहदेवी-शरपुष्प-शरमूलानि हुत्वा आजम् आविकं माहिषं वा घृतं हूयेत ।

**जिजाम्बा** — ततस्ततः ?

**उपाध्यायः** — ततश्च आश्वत्थ-आवसी-पारिजात-जारुषी-त्रापसी-खादिरी-अपामार्ग-पलाश-शमी-समिधः होष्यन्ते ।

**जिजाम्बा** — ततस्ततः ?

**उपाध्यायः** — ततश्च कुम्भ-सविधे शरावे सुवर्ण-सूत्र-निबंद्धः कुश-मूलमणिः संस्थाप्येत । ततश्च होममण्डपाद् बहिः चतुर्दिक्षु उप-लिप्त-सिकताः विकीर्य पाषाण-स्थापनं भविष्यति ।

**जिजाम्बा** — ततस्ततः ?

**उपाध्यायः** — ततश्च यजमानः प्राङ्मुखः उपविश्य शान्ति-गणेन,

कृत्या-गणेन, चातन-गणेन, मातृनाम-गणेन, वास्तोष्पति-गणेन, पाप्महा-गणेन, यक्ष-नाशन-गणेन, दुःस्वप्न-नाशन-गणेन, आयुष्य-गणेन, वर्चस्य-गणेन, स्वस्त्ययन-गणेन, अभय-गणेन, अपराजित-गणेन, शर्मवर्म-गणेन, रौद्र-गणेन, चित्रा-गणेन, पात्नीवता-गणेन च हवनं करिष्यति ।

**जिजाम्बा** — अहो दुष्करम् इदं कर्म-काण्डं नाम वैदिकानाम् ! अस्तु । ततस्ततः ?

**उपाध्यायः** — ततश्च दधि-सक्तून् 'रक्षेभ्यो नमः' इत्युक्त्वा दक्षिणतः निक्षिप्य संपात-कलशोदकेन अभिषेकमन्त्रैः सपत्नीकं महाराजम् अभिषिञ्चेत् पुरोहितः । सुवर्ण-सूत्र-निबद्धं च कुश-मूल-मणिं दधि-मध्वक्तम् अभिमन्त्रितं च कृत्वा महाराजस्य बाहौ बध्नीयात् पुरोहितः ।

**जिजाम्बा** — अपि नाम समाप्तम् एतावता सप्तमाह्निकं कर्म-काण्डम् ?

**उपाध्यायः** — नहि नहि । ततश्च नवं वस्त्र-द्वयं परिधाय, पूर्णाहुतिं हुत्वा, वसोर्धारां पातयित्वा, आचार्याय ग्रामम् ऋत्विग्भ्यां दक्षिणां च दत्त्वा, उत्तरपूजां विसर्जनं च कृत्वा, प्रतिमाम् आचार्याय निवेद्य, अग्निं विसृज्य, शतसहस्रशः ब्राह्मणान् भोजयित्वा, कर्मसंपूर्णतां वाचयित्वा ईश्वरार्पणं कर्म करिष्यति महाराजः ।

**जिजाम्बा** — तथा च उक्तम् एव भगवता गीतासु—

"यत् करोषि यदश्नासि यज्जुहोषि ददासि यत् ।
यत् तपस्यसि कौन्तेय! तत् कुरुष्व मदर्पणम् ।।" इति ।

**हीरकणिका** — (अन्यतः) रत्नमाले ! जिजाम्बा शास्त्रम् अपि जानाति ।

रत्नमाला — अत एव वैदिकाभिषेकविधौ तस्याः अभिनिवेशः।
जिजाम्बाः — उपाध्याय! अथ कथं विधास्यते राजाभिषेकः सिंहासनारोहणविधिश्च इति मे सविस्तरं निवेद्यताम्।
उपाध्यायः — (पुस्तकम् अवलोकयन्) श्रुणोतु अम्बा! यथोक्ताम् ऐन्द्रीं शान्ति समाप्य अद्य शुक्रवासरे द्वादश्यां तिथौ एव प्रदोषकालाद् आरभ्य स्वस्तिवाचनं, मातृकापूजनं, वसोर्धारा-पूजनं, नान्दीश्राद्धं, नारायणपूजनम्, आज्यहोमः, गणपतिपूजनं, पुण्याहवाचनं, शालिग्रामपूजनम्, अग्निप्रतिष्ठापनम्, अष्टोत्तर-शताज्याहुति-हवनम् इत्यादिकं राजाभिषेकाङ्गभूतं विविध-विधि-जातम् आ-त्रि-यामं संपद्येत। ततश्च ब्राह्मे मुहूर्ते पुरोहित-सांवत्स-रिकौ सोष्णीषौ ऋत्विग्भिः सह सपत्नीकं महाराजं पुरस्कृत्य मङ्गल-घोषेण मण्डप-सभाम् आगच्छेताम्।
जिजाम्बा — ततस्ततः?
उपाध्यायः — ततः आचार्यः ऋत्विग्भिः सह मण्डप-पूजां महा-ध्वजोच्छ्रयणान्तां कुर्यात्।
जिजाम्बा — ततस्ततः?
उपाध्यायः — ततः महावेद्यां षोडशाक्षरं लिखित्वा, तत्र मध्ये सौशतं छिद्रं संस्थाप्य, पूर्वतः सौवर्णान्, दक्षिणतः राजतान्, पश्चिमतः ताम्रान्, उत्तरतः माहेंयान् चतुश्चतुःकुम्भान् स्थापयेत् आचार्यः।
जिजाम्बा — ततस्ततः?
उपाध्यायः — तन्मध्ये पूर्वतः एकः घृतपूर्णः, अन्यश्च मधुपूर्णः दक्षिणतः, एकः दुग्धपूर्णः पश्चिमतः, एकः दधिपूर्णः उत्तरतः संस्थाप्य, चत्वारः अन्ये जलपूर्णाः प्रतिदिशं कृत्वा तांश्च सर्वान् गन्धमाल्यार्चितान् वस्त्र-वेष्टित-कण्ठान् कुर्यात्।

**हीरकणिका** — अपि एतत् सर्वं महाराजः एव करिष्यति ?

**उपाध्यायः**—नहि नहि गागाभट्टानुसारिणः ऋत्विजः करिष्यन्ति ।

**जिजाम्बा** — भवतु कुम्भ-स्थापनानन्तरं किम् ?

**उपाध्यायः** — (वाचयति) ततः जलपूर्णेषु तेषु शतौषधिमूल-हेम-पञ्चरत्न-पञ्चधान्य-सप्तमृत्तिका-वृषशृङ्ग-गजदन्त-गोरोचना-उत्पल-पद्ममुरारेणुक-कुङ्कुम-राजसर्षप-मुक्ता-देवदारून् क्षिपेत् ।

**रत्नमाला** — कः नाम क्षिपेत् एतत् सर्वं वस्तुजातम् ? महाराजः वा—

**उपाध्यायः**—तत् तावद् अहं न जानामि । यल्लिखितं तद् वाचयामि ।

**जिजाम्बा** — भवतु । अभिषेक-वर्णनं श्रोतुम् उत्कण्ठितास्मि । ततस्ततः ?

**उपाध्यायः** — ततः वेद्याम् औदुम्बरीम् आसन्दीं, व्याघ्रचर्म, औदुम्बरं च चमसं, दधि-मधु-घृत-कुशोदक-आतपवृष्टिजल-दूर्वा-यवाङ्कुरपूर्णम् औदुम्बरीं शाखां हिरण्यं च स्थापयेत् । तत्रैव कुशान् पर्वतोद्धृतान् मृदः संस्थाप्य षोडश-बिल्व-दलानि स्थापयेत् ।

**जिजाम्बा** — ततस्ततः ?

**उपाध्यायः** — ततः उत्तरतः अभिषेक-शालायां भद्रासनं संस्थाप्य तदष्टदिक्षु अष्टौ जल-कुम्भान् पल्लवोपेतान् गन्धमाल्यार्चितान् वासोवेष्टितान् स्थापयेत् । तेषु च समुद्र-नदी-सरोवर-पुण्यकूप-गङ्गा-यमुना-जलानि यथालाभं क्षिपेत् । तत्रैव रत्नोदक-सर्वबीजोदक-सर्वौषध्युदक-गन्धोदक-पुष्पोदक-फलोदक-पल्लवोदक-कुशोदक-कुम्भान् यथावकाशं संस्थापयेत् । तत्रैव समुद्रोदक-यमुना-नर्मदा-तापी-चर्मण्वती-पयोष्णी-वितस्ता-सिन्धु-जल-पूर्णान् कलशान् यथालाभं स्थापयेत् ।

जिजाम्बा — (आत्मगतम्) एतानि तानि अभिषेकार्थं पुण्योदकानि आनेतुं तत्र तत्र प्रेषिताः आसन् अधिकारिणः पुरुषाः मया एव।

रत्नमाला — अम्ब! तत्तन्नदी-तीरवासिनः नानाकलाकुशलाः नारीनराः रायरीदुर्ग-परिसरे गीत-नृत्य-क्रीडादिभिः प्रमोदयन्ति अभिषेकार्थम् उपागतान् लोक-कदम्बकान्।

जिजाम्बा — भवतु। ततस्ततः ?

उपाध्यायः — ततः आसादितान् सर्वान् कलशान् वेदमन्त्रैः अभिमन्त्र्य, महावेद्युपरि वितानं बद्ध्वा, अग्निं ग्रहांश्च प्रतिष्ठाप्य प्रणीतापात्रसंनिधौ सौवर्णं जलपूर्णं पञ्चपल्लवाद्युपेतं कलशं यथाविधि स्थापयेत्।

जिजाम्बा — ततस्ततः ?

उपाध्यायः — ततः यजमानेन द्रव्यत्यागे कृते सर्वप्रधानहोमं कुर्युः। तत्र आदौ गायत्री-मन्त्रेण औदुम्बर-समिधः आज्यं च अष्टोत्तरशतं जुहुयुः। आज्याहुति-समये आचार्यः कुण्डे निमित्तं परीक्षेत।

हीरकणिका — तत्र शुभ-निमित्तं कीदृशम् ?

उपाध्यायः — दक्षिणावर्ति-धूमेन आच्छिन्ना ऊर्ध्वगा सूर्यप्रभा अग्निज्वाला शुभावहा। होमसमये जापकाः जपं कुर्युः। द्वारपाश्च द्वारजपं कुर्युः।

जिजाम्बा — राजाभिषेक-विधिं श्रोतुम् उत्सुका अस्मि। ततस्ततः ?

उपाध्यायः — ततः बलिदानान्ते आचार्यः यजमान-सहितः सर्वेषु कुण्डेषु पूर्णाहुतिं हुत्वा यजमानाभिषेकं कुर्यात्।

हीरकणिका — अम्ब ! महान् अयं धर्मविधिः अभिषेकात् पूर्वः।

**रत्नमाला** — अपि इदं प्रदीर्घं कर्म-काण्डं नियत-समये संपूर्णतां गमिष्यति ?

**जिजाम्बा** — गागाभट्टाः धर्म-कर्मसु अतीव कुशलाः। सर्वं यथा-विधि यथासमयं ते करिष्यन्ति। अलं चिन्तया। अस्तु इदानीं संपत्स्यमानं राजाभिषेक-विधिं श्रोतुम् लभामहे। वाचयतु उपाध्यायः।

**उपाध्यायः** — अभिषेक-शालायां सुगन्धि-तैलेन यजमानम् उद्वर्तयेत्। ततः उष्णोदकेन स्नपयित्वा शुक्ल-वस्त्र-गन्ध-माल्यं यजमानं पीठे उपवेश्य मृद्भिः संस्कुर्यात्।

**जिजाम्बा** — कीदृशः अयं मृत्-संस्कारः ?

**उपाध्यायः** — शृणोतु अम्बा ! विष्णुधर्मोत्तरीयान् मृत्संस्कार-विषयकान् प्रसिद्धान् श्लोकान् स्मरामि। यथा —

“आदौ तु स्वेच्छया स्नातं पुनर्मृद्भिः समारभेत्।
पर्वताग्र-मृदा तावन्मूर्धानं शोधयेन्नृपः।
वल्मीकाग्र-मृदा कर्णौ वदनं वै शिवालयात्॥
इन्द्रालय-मृदा-ग्रीवां हृदयं तु नृपाजिरात्।
करि-दन्तोद्धृत-मृदा दक्षिणं तु तथा भुजम्॥
वृष-शृङ्गोद्धृत-मृदा वामं चैव तथा भुजम्।
सरोमृदा तथा पृष्ठं चोदरं सङ्गमान्मृदा॥
नदी-कूल-द्वय-मृदा पार्श्वं संशोधयेत् तदा।
वेश्म-द्वार-मृदा राज्ञः कटि-शौचं विधीयते॥
गज-स्थानात् तथैवोरू गो-स्थानाज्जानुनी तथा॥
अश्व-स्थानात् तथा जङ्घे राजा संशोधयेद् बुधः।
रथ-चक्रोद्धृत-मृदा तथैव चरण-द्वयम्॥”

तथा च गङ्गा-मृदं सर्वाङ्गे उपलिप्य गोमूत्रं, गोमयं, क्षीरं, दधि, घृतं, कुशोदकं च राजशरीरे उपलेपनीयम् इति गागाभट्टाः लिखन्ति।

हीरकणिका — अम्ब ! एतावता मृत्-संस्कारेण गोकुले संचरन् गोपालकृष्णः इव विराजेत महाराजः।

रत्नमाला — अथवा भस्माङ्गरागः भगवान् शंकरः इव विराजेत।

जिजाम्बा — (सस्मितम्) भवतु इदानीं सुवर्ण-रजतादि-कलश-स्थितैः घृत-दधि-दुग्ध-मध्वादिभिः राजाभिषेकं श्रोतुं त्वरते मम अन्तःकरणम्। वाचयतु उपाध्यायः।

उपाध्यायः — ततः स्नातं शुक्ल-वस्त्र-गन्धानुलेपनं सोष्णीशम् अलंकृतं तं यजमानं मङ्गल-घोषेण मण्डपम् आनयेत् आचार्यः। तत्र वेद्युपरि व्याघ्र-चर्म-युताम् आसन्दीं पश्चात् द्वाभ्यां जानुभ्याम् आरोहेत् महाराजः। तत्र प्रथमं दक्षिण-जानुना ततश्च वामेन आरोहणम् आदिश्यते।

जिजाम्बा — ततस्ततः ?

उपाध्यायः — ततः राजा प्रार्थयेत्।

हीरकणिका — किमर्थं प्रार्थयेत् ?

उपाध्यायः — अभिषेकार्थम्।

जिजाम्बा — राजाभिषेकार्थम्। कीदृशी सा प्रार्थना ?

उपाध्यायः — श्रूयताम्।

"प्राच्यां मामभिषिञ्चन्तु वसवस्तेजसे श्रिये।
याम्यायामभिषिञ्चन्तु मां रुद्रा विजयाय च॥
आदित्या अभिषिञ्चन्तु प्रतीच्यां दिशि वृद्धये।
विश्वेदेवास्तथोदीच्यामभिषिञ्चन्तु पुष्टये।
दिशीशास्त्वभिषिञ्चन्तु मां सदा विजयाय च॥"



एवं प्रार्थनान्ते औदुम्बर्या सपलाशया आर्द्रया शाखया सांवत्सर-

पुरोहितौ प्रत्यङ्मुखौ प्राच्यां, उदङ्मुखौ दक्षिणे, वेदमन्त्रैः अभिषिञ्चेताम्। ततोऽभिषिक्तः यजमानः औदुम्बरीं शाखां भूमौ उदगग्रां निधाय तत्र पादौ स्थापयेत्।

जिजाम्बा — (स्वगतम् —) एतावता अति प्रदीर्घेण-कर्म-काण्डेन क्षुधाकुलः इव भविष्यति मे शिवः। (प्रकाशं —) भवतु, ततस्ततः?

उपाध्यायः — ततः आचार्यः यजमानाय कांस्य-पात्रे अनुमन्त्रितं गोरसं प्रयच्छेत्।

हीरकणिका — किं हवनार्थम्?

उपाध्यायः — पानार्थम्।

जिजाम्बा — (स्वगतं —) दिष्टया मनाक् कृपालु इदं कर्म-काण्डम्।

उपाध्यायः — ततश्च अग्नौ समिधम् आधाय ईशान-दिशम् उपस्थाय पुरोहितादिभिः सह तूर्यादि-मङ्गल-घोषेण अभिषेक-शालायाम् आगत्य महाराजः सिंहासने उपविशेत्।

जिजाम्बा — ततस्ततः?

उपाध्यायः — ततः ब्राह्मणामात्यः पूर्वदिगवस्थितं घृत-पूर्णं हेम-कुम्भम् अभिषेक-शालायां स-मङ्गल-घोषं नीत्वा —

"महते क्षत्राय महते आधिपत्याय महते जानराज्याय एष वो भरतो राजा सोमोऽस्माकं ब्राह्मणानां राजा।" — इति उच्चैः गर्जति गागाभट्टादि-पुरोहित-वृन्दे अभिषेकं कुर्यात्।

जिजाम्बा — महामात्यः मोरोपन्तः एवम् अभिषिञ्चेत् घृत-कुम्भेन।

हीरकणिका — अपि नाम मोरोपन्तः एव सर्वैः कुम्भैः राजाभिषेकं कुर्यात्?

उपाध्यायः — श्रूयताम् अग्रे। एवं क्षत्रियामात्यः दक्षिणा-दिगवस्थितेन क्षीरपूर्ण-रजत-कुम्भेन, वैश्यामात्यः पश्चिम-दिगवस्थितेन

दधिपूर्ण-ताम्र-कुम्भेन, शूद्रामात्यः उत्तरा-दिगवस्थितेन जलपूर्ण-मृन्मय-कुम्भेन। ततः छन्दोगः पूर्व-दिगवस्थितेन मधु-पूर्णेन हेम-कुम्भेन ततः आचार्यः कुशोदक-कुम्भेन। ततः सामगः जीवन्तीनां गवां शृङ्ग-कोषैः त्रिभिः, ततः वृषशृङ्गोदकेन अभिषिञ्चेत्।

जिजाम्बा — ततस्ततः ?

उपाध्यायः — श्रूयताम्। ततश्च रत्नोदक-सर्वबीजोदक-सर्वौषध्युदक-गङ्गोदक-पुष्पोदक-फलोदक-पञ्चपल्लवोदक-कुशोदक-कुम्भेन अभिषिञ्च्य, समुद्रोदक-यमुनोदक-नर्मदोदक-तापी-उदक-चर्मण्वती-उदक - पयोष्णी - उदक - वितस्तोदक - सिन्धूदकैः यथालब्धैः अभिषिञ्चेयुः।

जिजाम्बा — ततस्ततः ?

उपाध्यायः — ततः कुशोदकाभिषेकान्ते अष्टौ कुमार्यः अष्टौ पतिपुत्रवत्यः कृतमङ्गलाः गन्धोदकेन महाराजं नीराज्य सर्वगन्धैः अभिषिञ्चेयुः। ततः एकः क्षत्रियः शङ्खोदकेन अभिषिञ्चेत्।

जिजाम्बा — मन्ये एतावता परिसमाप्तः स्यात् जलाभिषेकः।

हीरकणिका — उपाध्याय! एवं शत-सहस्रविधैः पवित्रजलैः निर्वर्तितः अपि राजाभिषेकः न तावत् संपूर्णतां गच्छेद् यावत् अम्बायाः आनन्दाश्रु-जल-बिन्दवः न सिञ्चन्ति मातृचरणावनतं महाराजस्य अभिषेक-जलार्द्रं मस्तकम्।

उपाध्यायः — सर्वथा सत्यं वदसि हीरकणिके।

जिजाम्बा — उपाध्याय ! एतावन्तं प्रदीर्घ-तमं राजाभिषेक-विधिं समग्रतया अवलोकयितुम् असमर्था अहं जरा-जीर्ण-शरीरतया। अतः श्रीगागाभट्ट-विरचित-राजाभिषेक-प्रयोग-ग्रन्थ-श्रवणावसरे मानस-चक्षुषा प्रत्यक्षीकृतः मया सः महान् धर्म-विधिः। उपाध्याय ! राजाभिषेकान्ते किं भविष्यति इति संक्षेपतः कथयतु भवान्।

**उपाध्यायः** — ततः सर्वे जयध्वनिं पठेयुः। बन्दिनश्च स्तुतिं कुर्युः। गायकाः गानं कुर्युः। भेरि-वीणा-काहला-डमरु-मड्डु-डिण्डिम-झर्झरादि-वाद्यानि वादयेयुः। ततश्च विलीन-घृत-पूर्ण-कांस्य-पात्रे मुखावलोकनं, ब्राह्मणामात्येभ्यः अपरिमित गो-अश्व-भूमि-सूवर्णादिदानं, रथे ध्वजच्छत्रस्थापनम्, अभिमन्त्रित-धनुर्धारणम्, अक्षक्रीडनं, दिग्विजयार्थं महाराजाय रथ-प्रदानम् इत्येतावान् अयं महाराजाभिषेकविधिः संपद्येत श्वः मध्याह्नारम्भपर्यन्तम्।

**हीरकणिका-रत्नमाले** —अम्ब! राजाभिषेकानन्तरं पतिपुत्रवतीभिः सह महाराजस्य नीराजनां कर्तुम् इच्छावः।

**हीरकणिका** — पूर्वं परमानन्द-गुरोः गुरुकुले आवाभ्यां नीराजितः आसीत् महाराजः।

**रत्नमाला** — तदानीं जैत्रयात्रार्थं प्रस्थितः आसीत् महाराजः।

**जिजाम्बा** —हीरकणिके! रत्नमाले! अहमपि नीराजनाविधि-विराजमानं पुत्रस्य मुखं जवनिकान्तःस्था विलोकयिष्यामि। इदानीं बाढं परिश्रान्ताऽहं मनाक् स्वपितुम् इच्छामि एकाकिनी। उपाध्यायः अपि परिश्रान्तः इव लक्ष्यते प्रदीर्घ-वाचनेन। तदेतस्मै मधुरफलानि मधुपर्कश्च दीयताम्।

(सर्वे निर्गच्छन्ति)

**जिजाम्बा** —हा हन्त! नितान्तं परिश्रान्ताऽपि नाहं निद्रातुं शक्नोमि कर्षित-कलेवरा अपि नितान्तानन्द-सन्दोह-तुन्दिल-स्वान्ता। (पर्यङ्के स्थित्वा मराठीम् आश्रित्य गायति। —)

**"काय करू बाई आजि झोप न ये डोळा –**
**उद्या अभिषेक होईल माझ्या शिवबाळा ॥ १**
**जन्मवरी याचसाठी केला अट्टहास।**
**उद्या पुरेल ती माझ्या जीवाची आस ॥ २**

याच माझ्या इच्छेपायी वेळी अवेळी ।
बळी गेली पोरं बाळं रणी रानोमाळी ॥ ३

आज त्यांची आठवण दाटे क्षणोक्षणी ।
नेत्रावाटे आटेना हे जीवाचे पाणी ॥ ४

बाजी तान्हाजींच्या जेथे विझल्या जीवज्योती ।
लावा लक्ष ज्योती, तेथे ओवाळा आरती ॥ ५

सोन्याची सलकडी घाला वीर मावळ्यांना ।
माझ्या पोराबाळांना ।
रिता होवो खजीना, घ्या माझा दागीना ॥ ६

स्वराज्याच्या पायी गेले ज्यांचे वज्रचुडे ।
उद्या आधी नमवीन माथा त्यांच्या पुढे ॥ ७

असो आता आठवावे किती झाले गेले ।
इच्छा भवानीची आजि भाग्य उगवले ॥ ८

रिते करा भांडार आता करा अन्नदान ।
ऐसे करा अन्नदान ।
भुके कीट पाखरु तरी मी उपवासी राहीन ॥ ९

आनन्दाचे आसू माझे आधी न्हाणतील ।
पुढे अभिषेक करो सप्त-सिन्धु-जल ॥ १०

शिवबा सिंहासनी येता देईन आशीर्वाद ।
आधी देईन आशीर्वाद ।
गागाभट्ट गर्जतील पुढे मन्त्रवेद ॥ ११

(पटाक्षेपः)

# सप्तमोऽङ्कः ।

(नेपथ्ये — तन्त्री-मुरली-वेणु-वीणा-रुद्रवीणा-भेरी-मृदङ्ग-काहल-शङ्ख-गोमुख-घण्टा-किङ्किणी-योगचापादीनां वाद्यानां मञ्जीर-तालानुषक्त-नटनर्तकगण-चञ्चच्चरणरणन्मणिनूपुराणाम् उत्तान भजन-गीतानां जय जीवेति उद्गर्जनानां वैदिक-मन्त्राणां शतघ्नी-प्रस्फोटानां च नानाविधा व्यतिषक्त-ध्वनि-प्रबन्धाः)।

महाद्वार-स्थितेषु खड्ग शूलादि-शस्त्रपाणिषु द्वारपालेषु कश्चित् द्वारपालः अपरं प्रति —

— अरे मदारशाह ! मन्ये इदानीम् अभिषेक-शालायां महाराजस्य घृत-दधि-दुग्ध-मधु-कलशैः अभिषेकः समाप्तः।

अपरः — अरे मदनशाह ! अतःपरं गङ्गा-यमुना-सिन्धु-नर्मदादि-पुण्यतीर्थैः अभिषेकः भवेत्। (सहर्षम्) अहो महाभाग्यम् अस्माकं यद् अस्मिन् राजाभिषेक-महोत्सवावसरे अत्र रायगिरौ राज-प्रासादस्य —

मदारशहा — महाद्वारे एव देशान्तरेभ्यः समागतानां पर्यवेक्षणं द्रष्टुं स्थापिताः वयम्। इदं हि महाद्वारं देशान्तरागतानां पुरुषाणां प्रवेशार्थम् आरक्षितम् अस्ति ।

(प्रविश्य कश्चित् पाश्चात्यवेशधारी पुरुषः —)

अहो दुष्करं खलु चार-कर्म । तथाहि

नित्यं नानाभाषावेशैः अनात्मनीनस्तथा चेष्टितैः।
बध्नन्नात्मनि परस्य भावं न वेत्ति चारो निजस्वभावम् ॥ १

अपि च

रङ्गेषु नक्तं परकीयरूपो नटो दिवा याति निजस्वरूपम् ।
चारः परं भूपतिकार्यमग्नो नक्तं दिवं नो भजते स्वरूपम् ॥ २

अस्मादृशां चाराणां वीक्षणैः सर्वं वीक्षते परकीयातिथिगण-चेष्टितानि महाराजः। इदानीम् (आत्मानं विलोकयन्) ईदृशं विचित्रं पाश्चात्त्यवेशं धृत्वा इङ्गलण्ड-फ्रान्स-पोर्तुगाल-जर्मनी-ग्रीस-रूसादि-देशेभ्यः समागतानां चेष्टितानि मया पर्यवेक्षितव्यानि। विविध पाश्चात्त्य भाषाभिज्ञतया नियोजितः अस्मि महाराजेन अस्मिन् चारकर्मणि। सर्वदा पाश्चात्त्येषु चार-कर्मणि व्यापारयन् मां महाराजः प्रबोधयति — "अरे बहिर्जी! अतीव कपट-पटवः खलु एते गोरुण्डादयः गौरकायाः। तद् अप्रमत्तेन त्वया वर्तितव्यम् एतेषु।" — इति।

(अन्यतः अवलोक्य सचकितम्) अरे! एतत् तत् यूरोपीयानां समानवेशं समान-चरण-विन्यासं सम्यक्-तति-बद्धं हृद्य-वाद्य-सहितं प्रतिनिधि-वृन्दं हेन्री ऑवझेण्डन-पुरस्सरम् इतः एव निरीक्षमाणम् आयाति।

(ततः प्रविशति यथानिर्दिष्टं प्रतिनिधि-वृन्दम्)

लेफ्ट् राइट्। लेफ्ट् राइट्। लेफ्ट् राइट्। लेफ्ट—

**बहिर्जी** — (परावृत्य कठोर-पाश्चात्त्य-स्वरेण गर्जति) हॉल्ट्! (वृन्दं सहसा तिष्ठति।) (सस्मितम् स्वगतम्—) अहो पाश्चात्त्यानां दृढम् अनुशासनम्। सहसा तदनायकस्य अपि मम बहिर्जी-नायकस्य ध्वनिम् आकर्ण्य स्तब्धीभूतम् इदं काष्ठपुत्तलवत् वृन्दम्। (प्रकाशम् अग्रेसरं प्रति) हू आर यू?

**अग्रेसरः** — आय ॲम् हेन्री ऑवझेण्डन! वुई आर् ऑल युरोपीयन्स, कमिङ्ग फ्रॉम व्हेरीयस् नेशन्स।

**बहिर्जी** — व्हॉट् अबाउट दि एण्ट्रन्स पास?

हेन्री — वुई हॅव गॉट् धिस् एण्ट्रन्स पास टू एन्टर दि पॅलेस अॅट दि टाईम ऑफ सिंहासनाधिरोहण-सेरिमनी (घटिकायन्त्रं विलोक्य) वुइ हॅव इन्फॉर्मं धिस् मॉर्निङ्ग अवर-दॅट् इज एट् ओ क्लॉक इन् दि मॉर्निङ्ग टु पे अवर होमेज टु (पत्रकं विलोकयन् पठति) "गोब्रॅह्मनप्रटिपालक-क्षट्रिय-कुलावटंस-सिंहासनाढीश्वर-श्रीमट् छट्रपटि-शिवाजिमहाराज दि ग्रेट ! दि डिव्हाइन हीरो !

नेपथ्ये — शृण्वन्तु शृण्वन्तु लोकाः। अभिषेकान्ते यथाविधि सुवर्ण-सिंहासनाधिष्ठितः महाराजः इदानीं देशान्तरेभ्यः सोपायनं समागतान् प्रधानपुरुषान् दर्शनदानेन अनुगृह्णाति।

हेन्री — वेल् जण्टल्मन् ! नाउ इट् इज हाय टाइम ! यू शुड् रिक्वेस्ट दीज गार्डस् फॉर अवर एण्ट्रन्स इन्साईड द पॅलेस।

चारः — अरे मदारशाह ! अयम् अक्षिनन्दन-नामधेयः यूरोपीय-प्रतिनिधीनाम् अग्रेसरः (प्रवेशपत्रकं निरीक्ष्य) यथावसरं यथोचितं प्रवेशाधिकार-पत्रकं प्राप्तवान्। तद् दीयताम् अस्य प्रासादान्तःप्रवेशः।

मदारशाहः — भो भो आरक्षिणः ! अयम् अक्षिनन्दनः नाम गोरुण्डः यूरोपीय-वृन्देन सह प्रासादान्तः प्रविशति।

मदनशाहः — तद् अप्रमत्ताः भवन्तु सर्वे। (उभौ प्रवेशपत्रं निरीक्ष्य) प्रविशतु अक्षिनन्दनः वादक-वृन्देन।

हेन्री — अटेन्शन् ! स्लो मार्च। (यूथं प्रचलति) लेफ्ट राइट्। लेफ्ट। लेफ्ट। लेफ्ट राइट्। लेफ्ट। अन्यतः अवलोक्य साश्चर्यम् हाऊ वण्डरफुल् ! फ्रेण्डस् लुक् अॅट् द ग्रेसफुल् एलिफण्ट्स् ! हाऊ दे आर् ब्रॉट् टु सच् ए हाइट् !

(इति विष्कम्भकः)

(प्रथमं दृश्यम्)

(सुवर्ण-सिंहासनाधिष्ठितः नानालङ्कार-दीप्तः शिवराजः। वामतः सोयराम्बा। चरण-पीठ-निकट-स्थितासने शंभुराजः। मातुरुत्सङ्गे राजारामः। परितः प्रतिस्तम्भं मोरोपन्तप्रमुखाः अष्टौ अमात्याः। पार्श्वतः कवीन्द्रादि-विद्वत्-परीतः कर-कलित-राजच्छत्र-दण्डः श्रीगागाभट्टः उच्चैः गर्जति। —

गागाभट्टः — "सविता त्वा प्रसवानां सुवताम् अग्निर्गृहपतीनाम्, सोमो वनस्पतीनां, रुद्रः पशूनां, बृहस्पतिर्वाचाम्, इन्द्रो ज्येष्ठानां, मित्रः सत्यानां, वरुणो धर्मपतीनां, ये देवाः देवसुवः स्थन इमं श्रीशिववर्माणं श्रीशहाजिवर्मणः पुत्रम् अनमित्राय सुवध्वम्।"

(सर्वे मन्त्राक्षता-पुष्प-गन्ध-जलादिभिः महाराजम् अभिषिञ्चन्ति। ततः गागाभट्ट-कवीन्द्रादयः उच्चैः गर्जन्ति।)

"इमं देवा असपत्नमसुवध्यं महते क्षत्राय, महते ज्येष्ठाय, महते जानराज्याय, इन्द्रस्य इन्द्रियाय, श्रीशिववर्माणं श्रीशहाजिवर्मणः पुत्रं श्रीजिजादेव्यै पुत्रं श्रीजिजादेव्यै विश एष वोऽमी राजा सोमो अस्माकं ब्राह्मणानां राजा।"

(ततः अष्टौ कुमार्यः, हीरकणिका-रत्नमालाप्रमुखाः अष्टौ सुवासिन्यः नीराजनैः महाराजं पूजयन्ति। महाराजः यथाक्रमं सर्वाभ्यः सुवर्णालङ्कारादीन् सस्मितं समर्पयति।)

(सहसा प्रविश्य पाश्चात्यवेशः)

चारः — (सप्रणामम्) महाराज! पाश्चात्यदेशेभ्यः समागतं प्रतिनिधीनां वृन्दम् अक्षिनन्दन-पुरस्सरम् आयाति महाराजं सभाजयितुं स्वदेशाचारानुसारम्।

महाराजः — (चकित इव आत्मगतम्) अहो अयं बहिर्जिः परकीयानां चेष्टितानि पर्यवेक्षितुम् अस्माभिरेव नियोजितः। वेशान्त-

रेण स्वीयः अपि परकीयः इवायं प्रतिभाति। (प्रकाशं) सुखेन प्रविशतु।(ततः प्रविशति तूर्याणि वादयतां यूरोपीय-प्रतिनिधीनाम् अनुशासनबद्धं वृन्दम्। शिरोभूषणानि अवतार्य पाश्चात्त्य-पद्धत्या सर्वे प्रणमन्ति। वृन्दं तूर्यध्वनिना सह गायति। —)

वन् टू। वन् टू। वन् टू थ्री—

(भूपरागः)

त्वां नमामि शिवनृपाल! सन्ततं स्मरामि ते।
विशुद्धशीलमखिलविश्ववन्द्य! भूपते ॥ ३ ॥

त्वं जनपदसंस्कर्ता! त्वं जनगणधीदाता!
गो-द्विज-परिपालक! शिव! साधूनां त्वं त्राता।
त्वामभिजनमार्तानां बान्धवमतिदीनानां।
श्रीशिव! नृपवर्य! भजति मे हृदयम् ॥ ४ ॥

राष्ट्रमिदं दुष्टाभिहतं क्षीणबलं येनोत्थापितमखिलम्।
तं प्रबलं वीरप्रवरं भूपवरं चिन्तये ॥ ५ ॥

हे जगदभिराम! दुष्टखलविराम! ?
पूरितशुभकाम! पुण्यचरितधाम!
देव! परमवीर! शत्रुशमनधीर!
विश्वहितं ते चरितं नीतिनिधानम् ॥ ६ ॥

(अक्षिनन्दनः उपायनानि महाराज-चरणयोः समर्प्य प्रार्थनापत्रं समर्पयति। महाराजादेशेन चरः तत् पठति। अक्षिनन्दनः नाणकानि बहुशः प्रदर्श्य वादयति।)

महाराजः — (चरं प्रति) अरे! कोऽस्य अभिप्रायः?

चरः — महाराज! अयमस्य आशयः यद् अत्र राज्ये नाणकानि

॥ शिवराजस्तवः ॥

॥ॐ॥ भूप दादरा ॥ प पध प । ग गप ग । रे रेग रे । स ऽ ऽ ॥: स ऽ रे । ग ऽ ग । रे रेग रे । प ऽ ग ।

– – – – – – त्वां न मा मि शि वऽ नृ पा ल!

। प ऽ ध । सं ऽ ध । प ऽ ग । रे ऽ गरे । स ऽ रे । ग ऽ ग । रे रेग रे । प ऽ ग । ध ऽ प । ग ऽ रे । स ऽ ऽ । ऽ ऽ ऽ :॥

स न्त तं स्म रा मि ते। विऽ शु द्ध शी ल मखिऽल वि श्व व न्द्य! भू प ते! ॥१॥

॥: ध धसं धप । ग ग ग । प पध पग । रे रे रे । ग गप गरे । स सरे सधं । स रे प । ग ग ग । ध धसं धप । ग ग ग ।

त्वं जन पद संस्कर्ता त्वं जन गण धीदाता गोद्विजपरि पालक!शिव!साधूनां त्वंत्राता त्वामभिजन मार्तानां

। प पध पग । रे रे रे । ग गप गरे । स सरे सधं । स ऽ गरे । स ऽ ऽ :॥: रें ऽ संध । प ऽ ऽ । ध सं धप । ग ऽ ऽ ।

बान्धव मति दीनानां श्रीशिव! नृप वर्य!भजति मे हृद यम् ॥२॥ रा ष्ट्रमि दं दुष्टाभिह तं

। ध ऽ पग । रे ऽ ऽ । ग प ग । सरे गप ध । रें ऽ संध । प ऽ ऽ । ध सं धप । ग ऽ ऽ । ध ऽ पग । रे ऽ ऽ ।

क्षी णब लं येनोत्था पितमखिलम्।तं प्रब लं वी रप्रव रं भू पव रं

। ग ऽ रे । स ऽ ऽ :॥: स गरे सधं । पं ऽ पं । धं सरे गप । ग ऽ ग । स रेग पध । सं ऽ सं । ध पग रेस । धं ऽ धं ।

चि न्त ये ॥३॥ हे जग दभि रा म! दु ष्टखलवि रा म! पू रितशुभ का म! पुण्यचरित धा मं।

। स गरे सधं । पं ऽ पं । धं सरे गप । ग ऽ ग । प पध प । ग गप ग । रे रेग रे । स ऽ ऽ :॥

दे वप रम वी र श त्रुशमन धी र! विश्वहितं तेचरितं नीतिनिधा नम् ॥४॥

संगीतकार – हं. वि. दात्ये

गीतकार – डॉ. श्री. भा. वर्णेकर

न तथा सुदर्शनानि सुमुद्रितानि समध्वनीनि यथा तद्देशीयानि।

**महाराजः** — तत् किम् एतानि मिथ्याभूतानि अस्माकं सुवर्ण-नाणकानि ।

**चरः** — कथं मिथ्या-व्यवहारः संभवति रामराज्ये इव शिवराज्ये?

**अक्षिनन्दनः** — वुइ प्रे फॉर ए परमिट् टु एस्टॅब्लिश अवर मिण्ट फॉर युवर स्टेट । वुइ शॅल् सप्लाय यू ब्यूटिफुल् कॉइन्स ।

**चरः** — अत्र राज्ये स्वीयां नाणक-शालां नाणक-सौष्ठवार्थम् एते प्रार्थयन्ते । mint - for coins

**महाराजः** — ( सस्मितं स्वगतम् ) अहो धूर्ताः एते जलचराः। (प्रकाशम् —)अरे कथय एनम् अस्मन्-मनीषितम् । —

> शस्त्रे शास्त्रे धने धान्ये भाषा-भूषा-कलादिषु ।
> अपरायत्तमूर्जस्वि स्वराज्यं कामयामाहे ॥ ७ ॥

तथा च यदा अस्मद्देशीयाः स्वर्णकाराः स्वकलानैपुण्यं प्राप्नुयुः तदा अस्मदीयानि नाणकानि युष्मन्नाणकापेक्षया सुदर्शनतराणि भवेयुः । भवतु । निवर्तय एनान् यथागतम् ।

**चरः** — ( निर्गमनमार्गं निर्दिशन् ) क्विट् द पॅलेस् सर ।

**महाराजः** — सुवर्ण-ताम्बूल-गन्धजलादिभिः संमान्यताम् एतद् अतिथि-वृन्दम् । मोरोपन्त! मन्ये परिसमाप्तं विधिजातम् । इदानीं सपरिवारम् मातृपद-वन्दनार्थं त्वरते अस्माकं हृदयम् ।

**मोरोपन्तः** — यथा इच्छति महाराजः। ( सर्वे उत्तिष्ठन्ति । ) एतु एतु महाराजः !

( पटाक्षेपः । )

(द्वितीयं दृश्यम्)

(ततः प्रविशति पर्यङ्किकावस्थिता जपमालिका-हस्ता, हीरकणि-कया वीज्यमाना जिजाम्बा।)

जिजाम्बा — हीरकणिके! मन्ये एतावता समाप्तं स्यात् विधि-जातं सुवर्णसिंहासनारोहणोत्सवस्य।

हीरकणिका — नचिराद् अत्रैव आगच्छेत् महाराजः।

रत्नमाला — (ससम्भ्रमं प्रविश्य) अम्ब! सिंहासनाद् अवतीर्य इतः एव सपरिवारम् आगच्छति महाराजः पद-वन्दनार्थम्।

(नेपथ्ये— क्षत्रिय-कुलावतंस! गो-ब्राह्मण-प्रतिपालक! सिंहा-सनाधीश्वर-श्रीशिवाजि महाराज!—इति गर्जना)

मोरोपन्तः — इत इतो महाराजः।

(ततः प्रविशति यथानिर्दिष्ट-परिवारानुगतः महाराजः। सर्वे जिजाम्बां प्रणमन्ति। राजारामः सत्वरं तदुत्सङ्गे उपविशति। शंभुराजः चामरेण वीजयति।)

जिजाम्बा—(हस्तौ उत्थाप्य) शुभं भवतु! कल्याणं भवतु! (राजा-रामं लालयन्ती—) वत्स! दृष्टः नु राजाभिषेकविधिःतातस्य?

राजारामः — आम् दृष्टः मया अभिषेकः तातस्य। (सस्मितम्) मृत्तिकाभिः लिप्तम् आसीत् नख-शिखान्तं शरीरं तातस्य अभि-षेकात् पूर्वम्। (सर्वे हसन्ति।)

जिजाम्बा — (शंभुराजं प्रति—) वत्स! सुवर्णसिंहासनाधिरूढस्य शतसहस्र-रत्न-खचित-राजच्छत्रच्छाया-विराजमानस्य तातस्य वन्दितौ नु चरणौ प्रथमं त्वया युवराजेन?

शंभुराजः — अम्ब! सुवर्ण-सिंहासन-सोपाने तातचरणान्तिकम् एव स्थितोऽहम् सिंहासनारोहण-विधि-महोत्सवे।

जिजाम्बा — (सोयराम्बां प्रति) वत्से! पट्टाभिषेका महाराज्ञी इदानीम् असि स्वराज्यस्य। तत् पुत्रवत् पालनीयाः प्रजाः सर्वाः।

**सोयराम्बा** — (प्रणम्य–) प्रजापालने सर्वथा अम्बायाः चरण-चिह्नानुसारिणी भवेयम् ।

**जिजाम्बा** — गागाभट्ट ! अपि निर्विघ्नं संपन्नः सर्वोऽपि राजाभिषेक-महोत्सवः ?

**गागाभट्टः** –– कुतो धर्मक्रियाविघ्नो यत्र जार्गात संततम् ।
जगन्मातेव रक्षन्ती जिजादेवी कृपामयी ॥८॥

**निश्चलपुरी** — (बद्धाञ्जलिः सहसा पुरःसृत्य) अम्ब ! सुसंपूर्ण-मनोरथासु अपि सर्वासु प्रजासु अपूर्ण-मनोरथोऽयं जनः ।

**मोरोपन्तः** — (साश्चर्यम्) कीदृशः भवन्मनोरथः ? अपूर्व-राजाभिषेक-निमित्तं भूरि-दानैः लघूकृतः इव रघुराजः महाराजेन। रत्नाकराः अपि तोयमात्रावशेषाः कृताः । सर्वथा निरवशेषः इव राजकोशः भूरि-प्रदानैः ।

**निश्चलपुरी** — अम्ब ! वैदिकाभिषेक-विधिना संपूर्ण-मनोरथः मीमांसक-मूर्धन्यः गागाभट्टमहोदयः । अहं तु तान्त्रिकः अस्मि तद् यावत् तन्त्रशास्त्रोक्तं विधानम् अनुसृत्य न निवर्तेत महाराजस्य अभिषेकः तावद् असंपूर्ण-मनोरथः अस्मि ।

**जिजाम्बा** — वत्स शिवराज ! पूर्यताम् अस्यापि अयं मनोरथः।

**शिवाजिः** — यथा समादिशति अम्बा! (मनाक् स्थित्वा–)अम्ब! अहमपि असंपूर्ण-मनोरथोऽस्मि ।

( सर्वे परस्परं साश्चर्यं पश्यन्ति । )

**जिजाम्बा** — वत्स शिवराज ! सर्वथा महामनोरथः असि आबाल्यात् । तत् कीदृशस्ते मनोरथः इदानीम् !

**शिवाजिः** — अम्ब ! आबाल्यात् सर्वेषु विजयोत्सवेषु त्वया एव रत्नहारादयः भूयिष्ठाः उपहाराः मह्यं समर्पिताः। इदानीम् अस्मिन् परम-मङ्गल-महोत्सवावसरे अहं तुभ्यम् उपहारम् अर्पयितुम् इच्छामि । अयमेव मे मनोरथः ।

जिजाम्बा —(मन्दं विहस्य) गागाभट्ट ! इदानीं जरा-जीर्ण-कलेवरा शिवराजाभिषेक-दर्शन-मनोरथावरुद्ध-प्राणाऽस्मि केवलम् । तत् किमिदानीं क्षत्रिय-कुलावतंसस्य गो-ब्राह्मण-प्रतिपालकस्य सिंहासनाधीश्वरस्य छत्रपति-श्री-श्रीशिवाजिमहाराजस्य उपहारेण मे प्रयोजनम् !

शिवाजिः—अम्ब! अलम् अलम् उपाधि-समुच्चारण-क्लेशेन अनेन ।

आबाल्यादभिषिक्तोऽस्मि त्वत्कृपामृतवर्षणैः ।
त्वत्कृपाच्छत्रलाभेन नूनं छत्रपतिर्ध्रुवम् ॥९॥
त्वमेव मम लोकेऽस्मिन् शारदा बुद्धि-दायिनी ।
धन-प्रदायिनी लक्ष्मीः भवानी शक्ति-दायिनी ॥१०॥

अतः एतदेव त्वच्चरणयोः समर्पयितुं शक्नोमि अनन्य-स्वधन-विभवः तव पुत्रकः । (राजकिरीटं समर्प्य बद्धाञ्जलिः भूत्वा —) इदानीम् अस्मि संपूर्णमनोरथः । तथापि इदमस्तु ।

( भरतवाक्यम् — )

भूयाद् भारतवर्षमेतदखिलं ह्यासेतुहैमाचलं
ध्वस्तारातिबल-प्रभाव-मुदित-स्वत्वाभिमानोन्नतम् ।
त्यक्तान्योन्य-विरोधमत्र जनताः सद्धर्मवर्त्मानुगाः
वर्धन्तां शिवराजपुण्यचरितान्यन्तःस्मरन्त्योऽनिशम् ॥१०॥

* * * *

समाप्तमिदं शिवराजाभिषेकं नाम सप्ताङ्कं नाटकम् ।

* * * *

आनन्दनाम्नि शिवराजमहाभिषेक-
संवत्सरे त्रिशतवर्ष-महोत्सवे च ।
भक्त्याऽर्पये शिवनृपाङ्घ्रिसरोजयुग्मे
गीर्वाण-नाटकमयं मधुरोपहारम् ॥

# परिशिष्टम् ।

## प्रथमोऽङ्कः ।

(छायानाटके प्रथमं दृश्यम्)*

[ ततः प्रविशन्ति परितः उदग्रकरवालाः शिवाजिप्रमुखाः तरुणाः । सर्वे सोत्साहं प्रदक्षिणीकुर्वन्तः गायन्ति । ]

शिवाजिः — हर हर हर महादेव !

सर्वे — हर हर हर महादेव ! (इति त्रिः गर्जन्ति ।)

शिवाजिः — स्वातन्त्र्य-सङ्गर-दीक्षिताः
त्वच्चरण-शरणागताः ।

सर्वे — वयमविचल-निश्चयाः
हर हर हर महादेव ॥ १ ॥

शिवाजिः — उद्दाम-वेग-पुरस्सराः
एते वयं गिरि-निर्झराः ।

सर्वे — ध्येयार्णवं प्रति सत्वराः
हर हर हर महादेव ॥ २ ॥

शिवाजिः — श्रद्धा हिमाद्रि-समाऽचला
शक्तिर्नृसिंह-निभाऽतुला ।

---

*प्रथमाङ्कारम्भे छाया-नाटके संक्षेपतः निर्दिष्टं पूर्वंशिवचरितम् अत्र सविस्तरं दीयते । अत्रत्यानि सर्वाण्येव पद्यानि नाटककर्तुः शिवराज्योदय-नाम्नः प्रकाशितपूर्वात् महाकाव्यतः संगृहीतानि ।

सर्वे — आविर्भवत्वस्मासु सा
हर हर हर महादेव ॥ ३ ॥

शिवाजिः — वज्रः शिरसि यदि निष्पतेत्
वह्निर्वपुषि यदि संविशेत् ।

सर्वे — न हि निश्चयो नः प्रस्खलेत्
हर हर हर महादेव ॥ ४ ॥

शिवाजिः — अश्वा यथा झञ्झानिलाः
खड्गाः पुनः प्रलयानलाः ।

सर्वे — संप्रस्फुरन्तु हि नः सदा ।
हर हर हर महादेव ॥ ५ ॥

शिवाजिः — मुष्टिर्हि भीमगदायताम्
भल्लश्च शिवशूलायताम् ।

सर्वे — समराङ्गणे नः सर्वदा
हर हर हर महादेव ॥ ६ ॥

शिवाजिः — चापेषु नः सज्जीकृते-
ष्वारोपणीया अद्य ते ।

सर्वे — बाणाः पुरत्रय-दाहकाः
हर हर हर महादेव ॥ ७ ॥

शिवाजिः — हे रुद्र ! तव रौद्रात्मता
जायेत नो हृत्-संस्थिता ।

सर्वे — आदेहपातमनारतम् ।
हर हर हर महादेव ॥ ८ ॥

शिवाजिः — त्वत्सज्जकोदण्डोद्भवम्
टङ्का[illegible]भैरवम् ।

सर्वे — प्रस्फोटयास्मद्गर्जिते
हर हर हर महादेव ॥ ९ ॥
शिवाजिः — श्रीकण्ठ कण्ठे धेहि ताम्
विनिकृत्त-रिपु-मुण्डाङ्किताम् ।
सर्वे — त्वद्-वाञ्छितां नवमालिकाम्
हर हर हर महादेव ॥१०॥
शिवाजिः — त्वद्-विग्रहैक-विलेपनम्
कुर्याम रिपु-तनु-भास्मनम् ।
सर्वे — सङ्ग्राम-घोर-हुताशने
हर हर हर महादेव ॥११॥
शिवाजिः — त्वन्मस्तकोच्छलदापगा
स्वरयप्रदीर्णमहानगा ।
सर्वे — अस्मन्मनांसि पुनातु सा
हर हर हर महादेव ॥१२॥
शिवाजिः — त्वद्-भाल-लोचन-पावकः
ब्रह्माण्ड-मण्डल-दाहकः ।
सर्वे — नेत्रेषु नः संभ्राजताम्
हर हर हर महादेव ॥१३॥
शिवाजिः — त्वत्-कण्ठ-कुण्ड-सुसंचितम्
हालाहलं परमाद्भुतम् ।
सर्वे — वम तीक्ष्ण-शस्त्राग्रेषु नः
हर हर हर महादेव ॥१४॥
शिवाजिः — भुजगः स ते भुज-कङ्कणं

भव ! भवतु नः संरक्षणम् ।

सर्वे — समराङ्गणेऽरिनिषूदने
हर हर हर महादेव ॥१५॥

शिवाजिः — त्वद्-विग्रहार्घ-समाश्रिता
रणचण्डिका सा देवता ।

सर्वे — युद्धेऽस्तु नश्चाग्रेसरा
हर हर हर महादेव ॥१६॥

शिवाजिः — भरतभुवमतिमङ्गलाम्
हत-निखिल-खल-रिपु-बलाम् ।

सर्वे — कुरु करुणयाऽस्मत्-करैः
हर हर हर महादेव ॥१७॥

( पटाक्षेपः )

( द्वितीयं दृश्यम् )

(राजसभालये सिंहासनासीनः यवनाधिपः)

राजा —(उत्थाय) अहो प्रभावः! अहो वैभवम्! अहो सामर्थ्यं मोहम्मदीयानाम् अस्माकं सर्वंकषाधिपत्यस्य हिन्दुस्थानेऽस्मिन् ।

तथा हि —

खद्योतको भास्वति भासमाने
प्रद्योततां क्वापि कदाचिदत्र ।

सर्वे — परन्तु हिन्दुर्न महाप्रतापी
मोहम्मदीये प्रखराधिराज्ये ॥ १ ॥

राजा — ज्वलन्महाङ्गारचयेऽपि कुण्डे
प्रवर्धतां काञ्चन-वल्लरीह ।

सर्वे — न जातु देशेऽत्र तु हिन्दुशक्तिः
मोहम्मदीये प्रखराधिराज्ये ॥ २ ॥
राजा — झञ्झानिले दुर्धर-वृष्टि-पूर्णे
स्थिरीभवेत् कश्चन दीपकोऽपि ।
सर्वे — परन्तु नो हैन्दव-वंश-दीपः ।
मोहम्मदीये प्रखराधिराज्ये ॥ ३ ॥
राजा — क्षुधार्त-कण्ठीरव-मस्तके वा
शालावृकः कोऽपि पदं निदध्यात् ।
सर्वे — न साहसे जातु बलिष्ठ-हिन्दुः
मोहम्मदीये प्रखराधिराज्ये ॥ ४ ॥
राजा — विलङ्घयेत् बाहुबलेन कश्चित्
कदाचिदब्धिं मकरालयं तम् ।
सर्वे — न काङ्क्षितं पल्वल-फल्गु हिन्दुः
मोहम्मदीये प्रखराधिराज्ये ॥ ५ ॥
राजा — तृणाङ्कुरश्चापि भवेत् समर्थः
खर्जूर-वृक्षं सहसा विभेत्तुम् ।
सर्वे — आस्माक-साम्राज्य-तरोस्तु पर्णं
न स्प्रष्टुमीष्टे मनसाऽपि हिन्दुः ॥ ६ ॥
राजा — विलूनपक्षश्चटकोऽपि कश्चित्
आतीव्रभानूड्डयतां कदाचित् ।
सर्वे — बलिष्ठपक्षोऽपि परं न हिन्दुः
मनोरथेनात्र वितस्तिमात्रम् ॥ ७ ॥

द्वारपालः — (प्रविश्य) जयतु जयतु विजापुराधीश्वरः राजाधिराजः ! महाराज ! एष कोऽपि आहितुण्डिकः महाराजम् इदानीमेव द्रष्टुम् इच्छति ।

राजा — प्रवेशय शीघ्रम् । ( स्वगतम् ) अस्माभिः संप्रेषितोऽयं स्पशः पर्यवेक्षितुं समग्रं विजापुरीयं साम्राज्यम् —

( सहसा प्रविश्य )

आहितुण्डिकः — अहो विनष्टं विनष्टम् ! विध्वस्तं विध्वस्तम् ! महाराजाधिराज !

राजा — ( सरोषम् ) अरे मूढ ! किम् मदिरामत्तः इव अभद्रं जल्पसि विनष्टं विनष्टं, विध्वस्तं विध्वस्तम् —

पुरुषः — यदिदं विजापुरीयं साम्राज्यं, तत् पर्यवेक्षितुं पर्यटता मया ज्ञातोऽयं वृत्तान्तः ।

सचिवः — श्रावय यथाभूतं वृत्तान्तं संक्षेपतः ।

पुरुषः — (दीर्घं निःश्वसन्) अयमेव वृत्तान्तः यत् शहाजिपुत्रेण कपट-पटुना शिवेन गिरि-वनचर-सेना-सनाथेन अस्माकं बहवः दुर्गाः विजिताः, सेनाः पराहताः, कोशाः लुण्ठिताः । प्रासादाः —

राजा — ( सोद्वेगम् ) अलम् अलम् अनेन कर्णंतुदेन वृत्तान्त-श्रवणेन ।

( जवनिकान्तःस्थिता यवन-राजमाता सहसा प्रविश्य उच्चैः — यो हि तं गिरिमूषकं क्षुद्र-रिपुं हन्तुं निर्बध्य वा सजीवम् अत्र आनेतुं समर्थः स एव गृह्णातु इदं सुवर्ण-ताम्बूलम् ।

(सर्वे अधोमुखाः भूत्वा अन्योन्यं प्रेक्षन्ते)

यवनी — ( सक्रोधं फूत्कृत्य ) —

धिगस्तु वः शासनपिण्डपुष्टाः
साम्राज्यवृक्षाश्रितदुष्टकीटाः ।
सितासितश्मश्रुमलीमसानि
न द्रष्टुमिच्छामि भवन्मुखानि ॥८॥

नपुंसकाः पुंस्करभूषणानि
शस्त्राणि युष्मत्-कटि-लम्बितानि ।
वैरि-प्रहारेष्वलसान्यमूनि
तुदन्ति चित्तं मम दुःखतप्तम् ॥ ९ ॥
धिक्कारमर्हन्ति न किं भवन्तो
न्यक्कारितैः षण्ढजनैरपीह ।
स्वजीवितं यत् पुरुषार्थवन्ध्यम्
आहार-निद्रा-निरतं नयन्ति ॥१०॥
वरं मृतान्येव कलेवराणि
युष्मादृशां मांस-वसा-भृतानि ।
जायेत यैस्तृप्तिरतिक्षुधार्त-
श्वजम्बुकानां विपिनेचराणाम् ॥११॥
महार्हवस्त्राभरणानि देहा-
न्येतानि यान्यत्र विलोकयामि ।
न निर्विशेषाणि च तानि मन्ये
चैत्याहिताप्राणकलेवरेभ्यः ॥१२॥
किमन्धवल्लोचनसंपुटानि
निमीलितान्यत्र सभालयेऽपि ।
प्रत्यक्षमीक्षध्वमिदं पुरस्तात्
सौवर्ण-ताम्बूल-युतं सुपात्रम् ॥१३॥
स एक एवार्हति वीरवर्यः
स्प्रष्टुं सुताम्बूलमिदं मदीयम् ।
जेतुं ग्रहीतुं सहसा निहन्तुं
यस्तं शिवाजिं नितरां समर्थः ॥१४॥



( केचिम् मूर्च्छां नाटयन्ति )

( सहसा उत्थाय उदग्र-खड्गः )

अफझुल्लः — धिगस्तु शान्ति च धिगस्तु मौनं
धिगाननान्यत्र विनामितानि ।
धिक् तानि चित्तानि भवादृशानां
शिवाजि-नाम-श्रुति-भी-हतानाम् ॥१५॥

क्वाऽसौ प्रभावोऽस्मदुदग्रशक्तेः
क्व संभवोऽयं च भवत्सु भीतेः ।
मृगाधिराजस्य महागुहायां
मृगी कथं प्राविशदप्रगल्भा ॥१६॥

हे राजमातः !

क्रूरोत्तमोऽहं स्वर-विक्रमोऽहं
दुर्योधनः शत्रु-बिभीषणोऽहम् ।
मुष्टचैव निर्दलित-मस्तकं तं
बलिं पुरस्तात् तव कल्पयामि ॥१७॥

( उद्धतं प्रचलन् ताम्बूलं गृह्णाति ।)

( यवन-राजमाता रत्नहारान् तस्मै समर्पयति । तां प्रणम्य सः राजानं प्रणमति । )

राजा — वीरोत्तम ! अफझुल्लखान ! गृह्यताम् इदं मत्-कटि-पट्ट-बद्धं रत्न-त्सरु-खड्ग-रत्नं शिवाजि निहन्तुम् ।

( अफझुल्लः खड्गम् आदाय सर्वान् हुङ्कारैः धिक्करोति ।)

(पटाक्षेपः)

(तृतीयं दृश्यम्)

(नेपथ्ये पणवानकादि-रणवाद्य-निनादः। पटमण्डपे उद्धतं प्रविश्य उच्चासनम् आरुह्य —)

अफझुल्लः — (सरोषम् —) कृष्णाजिपन्त ! कथं चिरायते शहाजिपुत्रः।

कृष्णाजिः —(बद्धाञ्जलिः प्रविश्य) महावीरवर! इदानीम् एव सः प्रस्थितः प्रतापदुर्गालयात्। अस्मत्-सेना-संभारं दृष्ट्वा मध्येमार्गं कुण्ठितः इव स्यात् सः भयेन।

अफझुल्लः —(साट्टहासम्।) अस्माकम् अतिघोरं विक्रमं च स्मृत्वा इति ब्रूहि। (स्मृतिम अभिनीय-कटिपट्टं च परामृश्य) अहो अयं तीव्र-विषाक्तः खड्गः। (सहसा बहिराकृष्य) अनेन तं साम्राज्य-शत्रुम् आगतमात्रम् एव पशुवत् हन्मि।

(नेपथ्ये — जगदम्ब ! जगदम्ब !! जगदम्ब !!!)

अफझुल्लः — (श्रवणम् अभिनीय) आगतः सः चिर-प्रतीक्षितः साम्राज्यशत्रुः। बण्डाबहादुर। सावधानः भव।

(नेपथ्ये — उच्चैः जगदम्ब ! जगदम्ब !! जगदम्ब !!!)

शिवाजिः — (सहसा प्रविश्य) सुस्वागतं, सुस्वागतं लोकैकवीर-वर्याणाम्।

अफझुल्लः — (आसनाद् उत्थाय शीघ्रं पुरश्चलन्) एहि वत्स ! दर्शनीयोऽसि। (सहसा शिवाजिम् आलिङ्गति।)

अफझुल्लः —(उच्चैः कठोर-रवम् आक्रोशति)—हा हतोऽस्मि।

(पटाक्षेपः)



(नेपथ्ये रणतूर्यनिनादः। शतघ्नीध्वनिः। सैनाकोलाहलश्च।)

( चतुर्थं दृश्यम् )

(घनान्धकारे दुर्गं परितः खड्गहस्ताः यवनसैनिकाः परिभ्रमन्ति। केचित् सीत्कुर्वन्ति। नेपथ्ये डिण्डिम-घोषः।)

भोः भोः! शृण्वन्तु शृण्वन्तु सर्वे सैनिकाः। अत्र पर्णालदुर्गे मास-चतुष्टयं विजापुराधीश्वरस्य आदेशात् जौहरवीरेण सैंहिकेयेन इव बालसूर्यः शिवाजिः सर्वथा ग्रस्तप्रायः आसीत्। स च अद्य प्रभाते गङ्गाधरद्विजहस्तेन शरणागतिपत्रं प्रेषितवान्। न चिरादेव शरणागतं तं साम्राज्य-शत्रुं वन्दिग्राहं गृहीत्वा विजापुरं प्रति प्रस्थानं करिष्यति वाहिनीयम्। अतः सेनापतिः जौहरवीरः एकत्र चिरनिवासेन खिन्नान् सर्वान् वीरान् विजयोत्सवाय आदिशति। तत् सर्वेऽपि यथेच्छं गायन्तु, नृत्यन्तु, खादन्तु गोमांसं पिबन्तु च मैरेयम्। होऽऽऽ

कश्चित् सैनिकः — (जृम्भां नाटयन्) रात्रिजागरणेन खट्खटायेते मम लोचने तदहम् अत्रैव स्वपानि।

द्वितीयः — ( सहसा उपविश्य) अहमत्रैव निद्रानिमग्नः भवामि।

तृतीयः —( सहर्षं भूमौ लुठन्) अहं सुप्त्वा स्वप्नालिङ्गन-सुखम् अनुभवामि।

चतुर्थः —(उच्चैर्हसन्) अहं तु चिर-प्रतीक्षितां निद्राम् एव आलिङ्गामि।

( सर्वे स्वपन्ति। )

(ततः प्रविशति सखड्ग-भल्ल-शूलेन वीरगणेन परिवृतः शिवाजिः)

शिवाजिः — उल्लङ्घितः अस्माभिः सुदुर्लङ्घ्यः शत्रुसेनासागरः। अयं च अस्ताभिलाषीव वार्षुकेन मेघमण्डलेन भूयो भूयो अभिभूयमानः आषाढपौर्णिमाचन्द्रः। सूर्योदयात् प्रागेव विशालदुर्गं प्रवेष्टुम् आकाङ्क्षामः।

**कश्चित् सैनिकः** — (सहसा प्रविश्य) देव ! भवन्निर्गमनवृत्तान्तः विज्ञातः जौहरेण सेनापतिना। सपदि एव कालयवनानाम् अश्वानीकानि ढौकितानि तेन सर्वासु दिक्षु गवेषणार्थम् ।

**कश्चित् वीरः** — ( संभ्रान्तः इव ) देव ! अश्व-खुराघात-ध्वनिः श्रूयते। अहमेकाकी लघुतमचमूसहायः निर्दलयामि समग्रं शात्रवम् अश्वानीकम्, यावद् विशालदुर्गात् शतघ्नीध्वनिः देवस्य कुशलम् आवेदयति ।

**शिवाजिः** — बान्धवाः ! अमुम् आजिप्रभुं बाजिप्रभुम् अनुसृत्य अत्र पर्वतमार्गे निरोद्धव्या शत्रुवाहिनी ।

**बाजिप्रभुः** — गच्छतु देवः शीघ्रं विशालदुर्गम्। तावत् शत्रुसेनां निरोद्धुम् अत्रैव युद्ध्यामहे। भगवन् !

अस्माकं विद्धकायानां रुधिरैरभिषिञ्चितः।
तीर्थीभवेदयं नूनं निगूढः कन्दरापथः ॥ १ ॥

**सर्वे** — ( बद्धाञ्जलयः प्रार्थयन्ते ) —

गच्छतु देवः शीघ्र पुनर्दर्शनाय —!

( पटाक्षेपः )

## ( पञ्चमं दृश्यम् )

(राजसभायाम् अमात्यगणः शिवराजागमनं प्रतीक्षते ।)

(नेपथ्ये — साधूनां परित्राता, दुष्कृतां निहन्ता, सद्धर्म-समुद्धर्ता, अधर्माभ्युत्थान-प्रशमयिता परम-मातृदैवतः महाराजः शिवप्रभुः लोक-व्यवहारार्थं राजसभां प्रविशति। तद् अप्रमत्ताः भवन्तु भवन्तः।) (सर्वे सपदि समुत्थाय विनत-मूर्धानः प्रणामाञ्जलिभिः महाराजं सभाजयन्तः गर्जन्ति । )

— जयतु जयतु देवः ! जयतु जयतु देवः ! जयतु जयतु महाराजः ।

शिवाजिः —(स्वासनम् अधिष्ठाय) मोरोपन्त ! धर्मासनम् इदम् आरूढाः वयम् । तत किमद्य धर्मकारणम् ?

मोरोपन्तः — प्रतापराव ! आनीयतां सः निर्बद्धः पुरुषः ।

(ततः प्रविशति रज्जु-पाश-बद्धं पुरुषं गृहीत्वा आरक्षक-युग्मम् । )

आरक्षकः — देव ! अनेन दुरात्मना खण्डोजिना परदाराभिमर्षणं कृतम् इति धर्माध्यक्षैः निर्णीतम् । श्रुत्वा देवः प्रमाणम् ।

शिवाजिः — (सहसा सक्रोधम्) विच्छिद्यताम् अस्य दुरात्मनः महापातकिनः पाणिपादम् । उद्घोष्यतां च सर्वत्र जनपदेषु—

धर्मप्राणे स्वराज्येऽस्मिन् परदाराभिमर्षणम् ।
यः करिष्यति दुष्टात्मा प्राणदण्डं लभेत सः ।। १ ।। इति

सचिवः — एवमेव उग्रः दण्डः समुचितः नवोदिते स्वराज्ये ।

द्वितीयः — एतदेव म्लेच्छराज्यात् शिवराज्यस्य वैशिष्टयम् ।

तृतीयः — (सानन्दं) सर्वथा धर्म-राज्यं धर्मधुरन्धरेण देवेन महाराष्ट्रेषु संस्थापितम् ।

आरक्षकः — (सहसा प्रविश्य) देव ! एते सयवनीकाः केऽपि अधिकारिणः प्राप्ताः ।

राजा — शीघ्रं प्रवेशय तान् ।

पुरुषः — (प्रविश्य) एतु एतु भवती । अयम् अत्र धर्मासनासीनः महाराजः विराजते । प्रणम्यताम् अयं देवः । (समीपम् उपसृत्य) जयतु जयतु देवः ! (यवनी सभयं प्रणमति । सर्वे साश्चर्यं पश्यन्ति । )

शिवाजिः — (साश्चर्यम् उत्थाय) किमिदम् उपन्यस्तम् ?

पुरुषः — देव ! प्रभूतं सुवर्णकोशम् आदाय कल्याणदुर्गाधिपतिः निर्गच्छति इति श्रुत्वैव अस्माभिः सहसा मार्गे आक्रम्य गृहीतः कोशः ।

शिवाजिः — तथा च अस्माभिः एव आदिष्टम् आसीत् ।

पुरुषः — तत्र नानाविधरत्नेषु इदमपि स्त्रीरत्नं सहसा प्राप्तम् । सर्वथा राजोपभोग्यानि इति मत्वा —

शिवाजिः — (सक्रोधम्, उच्चैः) मूर्ख ! अनार्य ! सर्वथा अनार्यं त्वया आचरितम् । नचिराद् अस्य घोरप्रमादस्य कृते उग्र दण्डं ते दास्यामः । (उत्थाय यवनीसमीपं गत्वा सप्रणामं) देवि ! भगिनी असि शिवस्य । तत् क्षम्यताम् अज्ञस्य सेवकजनस्य अयम् अपूर्वः प्रमादः ।

यवनी — (अवगुण्ठनम् अपनीय सगद्गदम्) — हे अल्ल ! किमिदं पश्यामि ? किमिदं शृणोमि पुण्यवचनम् ?

नरतनुं श्रूयते भगवानिति
यदनिशं श्रुतमत्र मया वचः ।
तदधुना तव पुण्यचरित्रतो
मनुजदेव ! परिस्फुटतां गतम् ॥ २ ॥

हे नरदेव !

विजय एतु सदा तव दासताम्
अखिलभूतिरुपैतु च वश्यताम् ।
तव पवित्रयशोभिरिदं जगद्
धवलतां भजतामकलङ्किताम् ॥ ३ ॥

हे जगदलङ्कार !

भुवनमण्डलमण्डनमुज्ज्वलं
शिव ! भवन्तिमत्र परत्र वा ।

न खलु जात्वभवन्नभविष्यति
विमलशील महाद्युतिभास्वरम् ॥ ४ ॥
( प्रणामानतमस्तका तिष्ठति । )

शिवाजिः — मोरोपन्त ! सकल-सौभाग्यालङ्करणैः समलङ्कृत्य प्रतिप्रेष्यताम् इयं मे वन्दनीया धर्म-भगिनी पति-समीपम् ।

सर्वे — अयं खलु राजर्षिः । ऋषीणां राजा । सर्वथा पौराणिकम् ऋषिगणम् अतिशेते राजर्षिः अयम् ।

सैनिकः — (प्रविश्य) जयतु जयतु देवः ! देव इदं किमपि यवनानी-लिखितं पुस्तकं सुवर्ण-पेटिकायां निहितं शत्रुनगराक्रमणे अस्माभिः आसादितम् ।

शिवाजिः — मोरोपन्त ! दृश्यतां किमिदम् इति ।

मोरोपन्तः — ( निरीक्ष्य ) महाराज ! इदं खलु कुराणं नाम यवनानां धर्म-पुस्तकम् ।

शिवाजिः —( सादरम् उत्थाय ) — धर्म-पुस्तकम् ? तद् आनीयताम् अत्र । ( धर्मपुस्तकं मस्तके निधाय ) मोरोपन्त ! हरित-चीनांशुकावगुण्ठितं कृत्वा पुष्पोपहारैः अलङ्कृतं च धर्म-पुस्तकम् इदं यवनानां प्रार्थनालयं प्रति प्रेष्यताम् ।

" मानव्यमाङ्गल्यपरा उदाराः
धर्मा हि सर्वे भगवत्प्रणीताः । "

— इति शैशवे माता मे जिजादेवी समपाठयत् ।

दासी ( प्रविश्य ) — जयतु जयतु देवः ! चिरस्य देवं प्रतीक्षमाणा माता जिजादेवी भोजनाय समादिशति ।

राजा — मोरोपन्त ! अलमिदानीं कार्यान्तरैः ।

मातुः पितुर्गुरोर्वाज्ञा वेदाज्ञेव शुभङ्करी ।
महार्णवस्य वेलेव ह्यनुल्लङ्घ्या मता मम ॥४१॥

भवति ! एते वयम् आगच्छामः मातुः समीपम् ।

## ( षष्ठं दृश्यम् )

( नेपथ्ये )

हंहो सकलजगदीश्वर-सेवाधिकृता अधिकारिणः ! अप्रमत्ताः शृण्वन्तु शृण्वन्तु भवन्तः। अद्य हि निखिल-जगदीश्वरस्य महाराजाधिराज-मुकुटमणि-किरणरञ्जित-चरणयुगलस्य औरङ्गजेबस्य जन्म-मङ्गल-दिन-निमित्तं महाप्रासादे संमिलिते सकलराजमण्डले, दक्षिणदिग्विजयिना जगदीश्वरप्रबलेन जयसिंहमहाराजेन विवशीकृतः शिवाजिराजः महाराज-रामसिंह-सनाथः सुपुत्रः समागच्छति। तदा असंभ्रमाः अप्रमादाः अविचलिताः सावधानाश्च सर्वे तिष्ठन्तु इति समाज्ञापयति महामात्यः।

(ततः प्रविशति एकः कराङ्गुलि-बद्ध-पट्टकः, पट्टकावबद्ध-मस्तकश्च अपरः राजोपायनभारं वहन्तौ। )

एकः — सखे जसवन्तसिंह ! तेन सह्याद्रिवनेचरेण दुष्टेन मध्यरात्रे प्रासादं प्रविश्य खण्डिता मे कराङ्गुलयः। ततः आरभ्य मिष्टान्नभोजनमपि न सम्यक् कर्तुं पारयामि। राजोपायनपात्रम् अपि इदं न सुष्ठु धर्तुं शक्नोमि।

अपरः — सखे शास्ताखान ! अहमपि तेन क्रूरेण निर्दयतया शीर्षे पृष्ठे च खड्गाभिहतः मृदुलशय्यायाम् अपि सम्यक् शयितुं न शक्नोमि। न च शिरोभूषणभारमपि व्रणव्यथाकुले मस्तके सम्यक् धारयितुं पारयामि।

शास्ताखानः — सखे ! स एव अद्य राजसभालयं प्रवेक्ष्यति।

जसवन्तसिंहः — हन्त ! राजाधिराजस्य पुरस्तात् तदवस्थानम्।

शास्ताखानः — सर्वथा भयावहम्। नितरां भयंकरम् !! तन्मया पूर्वमेव तर्कयित्वा जननीमुखेन बोधितः औरङ्गजेबः।



जसवन्तसिंहः — कथंकार बोधितः ?

शास्ताखानः — यदसौ गिरिवनचरः व्याघ्रः इव दूरादपि उच्चैः कूर्दितुं प्रभवति। तद् वन्यः पशुः इव सिंहासनतः अतिदूरे स्थापनीयः इति।

(नेपथ्ये — जयतु शिवाजिमहाराजः! जयतु वीरवरः शिवाजिमहाराजः! जयतु जयतु धर्मधुरन्धरः शिवाजिमहाराजः!)

जसवन्त० — (श्रुत्वा) सखे! शास्ताखान! श्रुता नु त्वया लोकगर्जना:?

शास्ताखानः — आम् श्रुताः। तद् यावदसौ वन्यः खण्डिताङ्गुलिकं मां —

जसवन्त० — व्रणपट्टाङ्कित-मस्तकं मां च अत्र न प्रेक्षते तावदेव राजसभालये आसन-ग्रहणं कुर्महे।

(उभे सत्वरं निर्गच्छतः)

(नेपथ्ये — आगच्छन्तु, आगच्छन्तु महाराजाः।)

(ततः प्रविशति रामसिंहः राजपुत्र-धृत-कराङ्गुलिना शिवाजिना अनुगम्यमानः)

रामसिंहः — आगच्छन्तु, आगच्छन्तु महाराजाः!

शिवाजिः — रामसिंह! त्वत्-पितृचरणानां दृढानुरोधेन सह्याचलं विन्ध्याचलं गोदावरीं नर्मदां च समुल्लङ्घ्य प्राप्ताः वयम् अत्र यमुना-तीरम्।

कुमारः — तात! अपि वयं आगताः तदेव यमुनातीरं, यत्र भगवान् गोपालकृष्णः बहुशः बाललीलाः कृतवान्?

शिवाजिः — आम् तत्रैव वयम् आगताः।

कुमारः — तदहं मथुरा-वृन्दावनं द्रष्टुम् इच्छामि गोकुलं च।

शिवाजिः — नचिरात् पूरयिष्यामः कुमारस्य इमं मङ्गल-मनोरथम्। तदर्थमेव सुदीर्घः प्रवासोऽयम् अस्माभिः अङ्गीकृतः। न पुनः यवनाधिपस्य दर्शनार्थम्।

रामसिंहः — अनेन अनुग्रहेण एव पुण्यदर्शनानां श्रीमतां दर्शनपुण्यं प्राप्तम् औत्तराहैः धर्मबान्धवैः (ऊर्ध्वम् विलोक्य) ननु महाराज! अतिक्रामति इव राज-सभालय-प्रवेश-वेला तत् सत्वरं प्रविशामः।

पुरुषः — (सत्वरं प्रविश्य) राजन्! सत्वरं सभालयान्तः प्रविश्य तत्र जसवन्तसिंहादि-श्रेष्ठ-राजपुरुषाणां पृष्ठतः स्थापितेषु काष्ठ-पीठेषु आसन-परिग्रहः क्रियताम्।

शिवाजिः — (सहसा खड्गं स्पृशन्) रामसिंह! कोऽयम् अनादरः? कस्यायम् अपमानः? किम् एतेषाम् अस्मत्-खड्गाघात-विदारित-पृष्ठानां कातराणां पृष्ठदेशं चिकित्सितुं वयम् अत्र प्रेषिताः जयसिंहमहाराजेन?

रामसिंहः — (सभयम्) महाराज! अलं क्रोधावेगेन। अलं प्रकोपेन! महाराज! इयं हि राजसभा जगदीश्वरस्य।

शिवाजिः — रामसिंह! अलम् असंबद्ध-प्रलापेन!

कुमारः — "जगदीश्वरः खलु एक एव काशीपुराधीश्वरः भगवान् शंकरः" इति जिजादेव्या पाठितोऽस्मि।

रामसिंहः — सर्वथा सत्यं ब्रवीति कुमारः शंभुराजः।

शंभुः —सर्वव्यापी सर्वान्तर्यामी सः एव जगदीश्वरः वन्दनीयः नान्यः पामरः राजपीठाधिष्ठितोऽपि-इति तातचरणैः उपदेशः मे प्रदत्तः।

शिवाजिः — रामसिंह! बाल्ये वयसि पितृचरणैः सह विजापुर-राजसभां प्रविष्टेन अनेन शिवाजिना नैव अवनमितं मस्तकं देव-द्रोहिणः पुरस्तात्।

रामसिंहः — महाराज! अलं क्रोधावेगेन। अतिक्रामति जगदीश्वर —

शंभुः — ननु उच्यतां म्लेच्छाधीश्वर इति।

रामसिंहः — राजसभाप्रवेशवेला ।
शिवाजिः — नाहम् अत्र प्रवेष्टुम् इच्छामि ।

नाहमिच्छामि राज्ञोऽस्य युक्तायुक्ताविवेकिनः ।
सभायामत्र संस्थातुं भीरवो यत्र मेऽग्रतः ॥ १ ॥
ताम्बूलमपि नात्रत्यं ग्रहीतुं कामयाम्यहम् ।
किं पुनस्तं हि संमानं जघन्यजनकाङ्क्षितम ॥ २ ॥
बध्नन्तु राजदासा मां घ्नन्तु वा नचिरादिह ।
न पुरः स्थातुमिच्छामि नृपस्यास्याविवेकिनः ॥ ३ ॥

कामये। इति साधु। कमे णिङ्। णिङ् आत्मनेपदम्।

( इति निर्गच्छति । पटाक्षेपः )

## सप्तमं दृश्यम्

श्रीराम-मन्दिरे जप-मालिकां कर्षन्ती म्लानानना जिजादेवी ।
(प्रविश्य फलपात्रहस्ता राज्ञी) अहो कठोरा तपश्चर्या अम्बायाः! यस्मिन् दिवसे दुरात्मना औरङ्जेबेन आगरा-नगर्यां शम्भुराजेन सह कारालये कुण्ठितः महाराजः तस्माद् आरभ्य अन्नग्रहणं विहाय अहर्निशं विपत्ति-निवारणार्थं वाल्मीकि-रामायणगत सुन्दर-काण्डस्य पारायणं राममन्त्रस्य पुरश्चरणं च कुर्वती इयं राजमाता नान्यत् शृणोति नान्यं कंचन द्रष्टुम् अपि इच्छति ।
(समीपम् उपसृत्य) अम्ब ! इयम् अहं काशी नमामि ।
जिजाम्बा — (मन्दम्) पुत्रिके ! किमर्थम् अत्र आगतासि ?
काशीराज्ञी — अम्ब ! इदानीम् अतीतप्रायः मध्याह्नः । तन्मनाक् फलाहारं करोतु अम्बा !
जिजाम्बा — (सोद्वेग) अपसारय फल-जलादिकम् ।

स्पृहयामि नहीदानीं फलायाथ जलाय वा ।
न श्वासे नाऽथवोच्छ्वासे शिवशम्भू विना मनः ॥ १ ॥

हुण्डे ! नाहमतः परं किमपि सेविष्ये ।
काशीराज्ञी — तत् कियन्तं कालम् ?
जिजाम्बा — यावत् शम्भु-शिवयोः कुशलवृत्तान्तं न श्रोष्यामि। तद् गच्छ त्वं यथागता ।
काशीराज्ञी — (व्याकुलीभूय) हा हन्त! किमिदानीं करोमि? हा भगवन् करुणाकर ! जगदीश्वर ! हे जगदम्बिके परमवत्सले !
दासी — (सहसा ससंभ्रमं प्रविश्य) देवि ! एते केचन औत्तराहाः दण्ड-कमण्डलु-धारिणः जटाल-मस्तकाः श्मश्रुल-वदनाः काषाय-कौपीना मस्करिणः द्वारदेशं प्राप्ताः ।
राज्ञी — तद् भिक्षान्नदानेन परितोषय सर्वान् ।
दासी — देवि! जिजाम्बाया दर्शनेन विना न भिक्षान्नं गृह्णीमहे इति मां प्राह तेषाम् अग्रणीः (कर्णे) एवम् एवम् ।
राज्ञी — ( ससंभ्रमम् ) किं वदसि महाराजस्य इव तस्य मस्करिणः स्वर इति ? तत् किमिति विलम्बसे ?
दासी — देव्याः आदेशं विना कथम् अपरिचितानाम् अविश्वस्तानां राजप्रासादे प्रवेशः ? भवतु इदानीं देव्यनुज्ञां प्राप्य प्रवेशयामि। ( इति सत्वरं निर्गच्छति। )
राज्ञी — (जिजाम्बायाः कर्णे) एवम् एवम् ।
(ततः प्रविशन्ति मस्करिणः —"जय जय रघुवीर समर्थ"— इति भूयो भूयो गर्जन्तः । )
अग्रेसरः —( सत्वरं धावित्वा) अम्ब! एषोऽहं तव पुत्रकः शिवराजः प्रणमामि। (इति साष्टाङ्गं प्रणमति। सर्वे साष्टाङ्गं प्रणमन्ति ।)

( पटाक्षेपः )

॥ इति पूर्वंशिवचरितं नाम (छाया-) नाटकं समाप्तम् ॥

## परिशिष्टम्.... २

( शिवराजाभिषेके षष्ठेऽङ्के अन्ततो जिजाम्बया गीतस्य मराठी-पद्यस्य संस्कृते भावानुवादः )

अयि न स्पृशति मदीयं निद्राऽद्य लोचनम् ।
श्वो यद्‌ु शिवस्य भूयात् राजाभिषेचनम् ॥ १ ॥
दृढमेतदर्थमेव विहितं मया प्रयतनम् ।
श्वः पूर्णतां भजेन्मे तद्‌ु दीर्घचिन्तनम् ॥ २ ॥
एतन्मनीषितं मे नेतुं प्रपूर्णताम् ।
हा हन्त पुत्रकास्ते याता हुतात्मताम् ॥ ३ ॥
स्मरणैः समेधमानैस्तेषां प्रतिक्षणम् ।
सततं ममाश्रुपूरैः क्लिन्नं विलोचनम् ॥ ४ ॥
तानाजि-बाजि-मुख्याः कृतवन्त आत्मदानम् ।
तत्राऽस्तु लक्षदीपैरार्तिक्यपूजनम् ॥ ५ ॥
वीराः सुवर्णकटकैः संमानिता भवन्तु ।
क्षीणेऽपि राजकोशे मदलङ्कृतिं हरन्तु ॥ ६ ॥
भग्नं स्वराज्यकार्ये सौभाग्यलक्ष्म यासाम् ।
नतमस्तु मस्तकं मे पुरतोऽग्र एव तासाम् ॥ ७ ॥
स्मरणैरलं गतार्थैरलमार्तचिन्तनेन ।
अद्याम्बिकामनीषा फलितैव समुदयेन ॥ ८ ॥
कुरुतान्नभूरिदानैः रिक्तं हि धान्यकोषम् ।
खगकीटकेऽप्यभुक्ते विन्देय नैव तोषम् ॥ ९ ॥
आदौ मम प्रमोदाश्रुभिरस्तु राज्ञि सेकः ।
तैः सप्तसिन्धुतीर्थैर्भूयात् ततोऽभिषेकः ॥१०॥
सिंहासनाधिरूढे शिव आशिषो ममाद्याः ।
गर्जन्तु वेदमन्त्रान् भट्टास्ततोऽनवद्याः ॥११॥

## शि व रा जा भि षे क म्

## नाटक-कर्तुः परिचयः

**नाम** – डॉ. श्रीधर भास्कर वर्णेकर M. A. D. Lit. (नागपुरम्)

**जन्म** – दि. ३१-७-१९१९

**व्यवसायः** – नागपुर-विद्यापीठे संस्कृत-विभागाध्यक्षः

**रुचिः** – संस्कृत-साहित्य-व्याकरण-वेदान्तेषु

राष्ट्रशक्ति-मराठी-साप्ताहिकस्य भूतपूर्वः प्रथमः संपादकः।
संस्कृत-भवितव्य-साप्ताहिकस्य " " "
योगप्रकाश-मराठी-मासिकस्य संपादकः।
नागपुरस्थ-भोसला-वेदशास्त्र-महाविद्यालयस्य अध्यक्षः
नागपुरस्थ-योगाभ्यासि-मण्डलस्य अध्यक्षः।

**प्रकाशनानि**

१. मन्दोर्मिमाला (स्फुटकाव्यचतुःशती)। २. महाभारतकथाः। ३. भारतरत्नशतकम्। ४. स्वातन्त्र्यवीरशतकम्। ५. कालिदास-रहस्यम्। ६. रामकृष्णपरमहंसीयम्। ७. वात्सल्यरसायनम्। ८. अर्वाचीन-संस्कृत-साहित्य (डी. लिट्. प्रबन्धः)। ९. अभंगधम्मपद (धम्मपदस्य मराठी-पद्यात्मकं विवरणम्)। १०. शिवराज्योदयम्-महाकाव्यम्। ११. विवेकानन्दविजयम्-महानाटकम्। (बहुषु नियत-कालिकेषु प्रकाशिताः द्विशताधिकाः निबन्धलेखाः। अन्ये च नैके शोधप्रबन्धाः)। १२. शिवराजाभिषेकम् (नाटकम्)।

**अप्रकाशितम्**

१. परोक्षपाणिनीयम् (हिन्दी-प्रबन्धः)।

**बहुमानः**

शिवराज्योदय-महाकाव्यार्थं साहित्य-अकादमी-पारि